# भूमिका ।

" सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ॥ १ ॥
विनैतदखिलं श्रौतं स्मार्तं कर्म न सिध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥ २ ॥
अत एव द्विजैरेतदध्येतव्यं प्रयत्नतः ॥ "

इति नारदोक्तेर्भगवतो वेदस्य नेत्रस्थानीयञ्ज्यौतिषन्नान्तरीयकतयाऽध्येयन्द्विजातिभिः वेदविहितानि हि श्रौतस्मार्त्तकर्माणि ज्योतिःशास्त्रनिर्दिष्ट एव समये शक्यान्यनुष्ठेतुम् । तेन च गुणवति समये धार्मिककृत्यसम्पादनाय कालबोधकशास्त्रमेवाभ्यर्हितमिति नाविदितं विदुषाम् । त्रिस्कन्धात्मकस्य च ज्योतिःशास्त्रस्य संहितात्मिका स्वनामधन्यश्रीवृद्धवसिष्ठनिर्मितेयं वृद्धवासिष्ठसंहिता कालमहिम्ना विरलप्रचारा समजनि । अस्यां हि शास्त्ररूपरविचन्द्रभौमादिचारवर्षेशनिर्णयफलातीथिस्वरूपाध्यायवारनक्षत्रयोगमुहूर्तगोचरविचारगोचरसंक्रांतिचन्द्रतारावलोपग्रहग्रहकूटसर्वलग्नबलपुंसवनादिसंस्कारराज्याभिषेकारिष्टगजग्रहादिशांतियात्रागृहप्रवेशवास्तुपूजाप्रतिष्ठागुणदोषनिरूपणदोषापवादवस्त्रपरिधानोत्पातरोगशान्त्याख्येष्वध्यायेषु गृहस्थादिवर्णोपयोगिकृत्यजातं विस्तरतयोपवर्णितम् । स्वतपोमहिम्ना करामलकविश्वैर्महर्षिभिर्विश्वोपकारायैव नानासंहितादिग्रन्था व्यरचिषतातश्च स्वपूर्वजानान्निखिलजनतोपकारिणाम्महर्षीणां वाक्यामृतेषु विधेयतया प्रवर्तनमेवावशिष्यतेऽञ्जसा जयपुरनिवासिपण्डितगोकुलचन्द्रज्योतिर्विद्वरप्रेषितपुस्तकसाहाय्यतोऽनुपलब्धाभिधानस्यान्यस्य कस्यचिद्विदुषः पुस्तकसाहाय्यतश्च कनिग्रामग्रामनिवासिझोपाह्वपण्डितवज्रशर्मज्योतिर्विदैतत्पुस्तकं शोधितम् । एवं महता श्रमेणैतत्पुस्तकम्मया मुद्रितमनुग्राहका ग्राहकाः शीघ्रतयास्य संग्रहे सयत्ना भवेयुर्लभेरंश्च महर्षिश्रीवृद्धवसिष्ठोपदिष्टफलानीति मुहुरर्थयते क्षेमराजश्रीकृष्णदासः ।

भवदीय

गंगाविष्णु श्रीकृष्णदास,
' लक्ष्मीवेंकटेश्वर ' प्रेस–कल्याण.

॥ श्रीः ॥

# अथ वसिष्ठसंहिताध्यायानुक्रमणिका ।



इति वसिष्ठसंहिताध्यायानुक्रमणिका समाप्ता ।

श्रीगणेशाय नमः ।

# वसिष्ठसंहिता.

## अथ शास्त्ररूपाध्यायः १ ।

ब्रह्मोऽम्भोजभवामरेन्द्रनिकरस्फूर्जत्किरीटोज्वल- ।
ज्योत्स्नालीढपदारविन्दयुगलस्तत्वस्वरूपो रविः ॥
ब्रह्माण्डोदरसंस्थिताखिलजगत्तद्ध्वान्तविध्वंसनं ।
यः कुर्वन्निखिलं जगत्प्रतिदिनं पर्य्येति कालात्मकः ॥ १ ॥
ज्योतिःशास्त्रं समग्रं प्रथमपुरुषतः स्वर्णगर्भाद्विदित्वा ।
पूर्वं ब्रह्मा ततोपर्यखिलमुनिगणप्रार्थनाद्यश्चकार ॥
तच्चेदं सुप्रसन्नं मृदुपदनिकरैर्गुह्यमध्यात्मरूपं ।
शश्वद्विश्वप्रकाशं ग्रहचरितविदां निर्मलं ज्ञानचक्षुः ॥ २ ॥
स्कन्धद्वयं वृत्तविचित्रमर्थगम्भीरमादावधुना यदुक्तम् ॥
तत्संहितास्कन्धमिदं तृतीयं वक्ष्ये जगन्मोहननामधेयम् ॥ ३ ॥
क्रतुक्रियार्थं श्रुतयः प्रवृत्ताः कालाश्रयास्ते क्रतवो निरुक्ताः ॥
शास्त्रादमुष्मात्किल कालबोधो वेदांगताऽमुष्य ततः प्रसिद्धा ॥ ४ ॥
छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्योतिषं चक्षुषी च ॥
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट् च ॥ ५ ॥
वेदस्य चक्षुः किल शास्त्रमेतत्प्रधानतांगेषु ततोऽस्य जाता ॥
अंगैर्युतोऽन्यैः परिपूर्णमूर्तिश्चक्षुर्विहीनः पुरुषो न किंचित् ॥ ६ ॥
अध्येतव्यं ब्राह्मणैरेव तस्माज्ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम् ॥
एतद्बुद्ध्वा सम्यगाप्नोति यस्मादर्थं धर्मं मोक्षमग्र्यं यशश्च ॥ ७ ॥
श्रुतिस्मृतिज्ञः पटुरर्थशास्त्रे शब्दोपदिष्टः कुशलः कलासु ॥
त्रिस्कन्धविज्ज्योतिषिकः सुवेषः कुली सुवृत्तस्त्वगदः सुशीलः ॥ ८ ॥

शास्त्रस्वरूपग्रहचारमानप्रत्येकपंचांगफलं क्षणाख्याः ॥
गोचारसंक्रांतिनिशीशताराबलोपलेट्यग्रहकौटभाश्च ॥ ९ ॥
त्रिःस्कन्धपारंगम एव पूज्यः श्राद्धे सदा भूसुरवृन्दकार्ये ॥
नक्षत्रसूची किल पापरूपो हेयः सदा सर्वसुधर्मकृत्ये ॥ १० ॥
आधानपुंसवनमष्टममंगलं यत्संजातकर्मवरनामनवान्नभुक्तिः ॥
चूडाविधिव्रतविवाहनृपाभिषेकयात्राप्रवेशनववास्तुसुरप्रतिष्ठाः ॥ ११ ॥,
गुणदोषयोर्निरूपणमुभयोरपवादमंबरोत्पातौ ॥
अखिलोत्पातप्रशमनशांतिकमिश्राख्यपैत्रिकाध्यायाः ॥ १२ ॥
पंचोत्तरचत्वारिंशद्विपुलाध्यायैर्विराजते स्कंधः ॥
अज्ञाज्ञानोपशमनमितरेषां बुद्धिवर्द्धनं नित्यम् ॥ १३ ॥
इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां शास्त्ररूपाध्यायः प्रथमः ॥१॥

## अथार्कचाराध्यायः २ ।

अथार्कचाराज्जगतः शुभाशुभे न्यूनाधिमासेतरमासनिर्णयः ॥
उद्वाहसंक्रांतिदिनार्द्धनिश्चयः सर्वप्रपंचो भवतीति तद्वशात् ॥ १ ॥
मकरादिराशिषट्कमुदगयनं कर्कटादिकं याम्यम् ॥
राशिद्वयार्कभोगात्षड्ऋतवः शिशिरादयः क्रमशः ॥ २ ॥
चैत्रादिमासेन यथाक्रमेण मेषादयो द्वादश राशयः स्युः ॥
न्यूनाधिमासेषु समागतेषु चलंति तेभ्यो नियतं विनाऽपि ॥ ३ ॥
सर्वेषु मासेष्वधिमासकः स्याच्चुलादिमासत्रयगः क्षयाख्यः ॥
संसर्पकः पूर्वभवोऽधिमासः पश्चाद्भवोऽहस्पतिनामधेयः ॥ ४ ॥
यस्मिन्दर्शस्यांतादर्वागेका परा परं दर्शम् ॥
उल्लंघ्य भवति भानोः संक्रांतिः सोऽधिमासः स्यात् ॥ ५ ॥
आद्यंतदर्शयोर्मध्ये तयोराद्यन्तयोर्यदा ॥
संक्रांतिद्वितयं चेत्स्यान्न्यूनमासः स उच्यते ॥ ६ ॥

१ दिनाब्दनिश्चयः इति पाठान्तरम् ।

मासप्रधानाखिलमेव कर्म मुक्त्वाखिलं कर्म न कार्यमत्र ॥
यज्ञोपवासव्रततीर्थयात्राविवाहकर्मादि विनाशमेति ॥ ७ ॥
दास्रादिऋक्षद्वयगे दिनेशे वृष्टिर्भवेत्क्षेमकरी जनानाम् ॥
वह्न्यृक्षसंस्थे यदि वृष्टिरीतिर्ब्राह्मद्वये स्यादतुलं सुभिक्षम् ॥ ८ ॥
प्रवेशकाले यदि रौद्रभस्य वृष्टिर्भवेदीतिरनर्घता च ॥
शेषेषु पादत्रितयेषु भीतिरत्यल्पवृष्टिर्महती गदा च ॥ ९ ॥
आर्द्राप्रवेशेऽह्नि जगद्विपत्तिं सस्यस्य नाशं कुरुतेऽल्पवृष्टिम् ॥
क्षेमं सुभिक्षं निशि सस्यवृद्धिं सुवृष्टिमत्यंतजनानुरागम् ॥ १० ॥
पुनर्वसोर्भादशधिष्ण्यवृन्दे प्रीतिर्जनानां कलहो नृपाणाम् ॥
मैत्रादिऋक्षत्रितये नराणां विभावसोः साध्वसमामयश्च ॥ ११ ॥
जलाधिदैवर्क्षगते पतंगे विद्युन्मरुद्वारिघनैश्च युक्ते ॥
दिनेषु सार्द्धत्रितयेषु पश्चाद्रौद्रादिभेषु क्रमशः सुवृष्टिः ॥ १२ ॥
भंगोऽस्य पौष्णर्क्षगते दिनेशे भिन्नेषु रात्रावपि वीक्षणीयम् ॥
विश्वादिऋक्षत्रितये यदा स्यात्तदा सुभिक्षं त्रिषु वारुणर्क्षात् ॥ १३ ॥
राहोः सुतास्तामसकीलकाद्याः कबंधकाकोट्टश्रृगालरूपाः ॥
यदा रवेर्मण्डलगास्तदानीं मातंगभूपाहवभीतिदाः स्युः ॥ १४ ॥
छत्रध्वजे भाङ्कुशगोवृषाश्वदंडास्त्रभद्रासनसिंहरूपाः ॥
दृष्टा रवेर्मण्डलगा यदा ते जगद्विपत्तीतिभयप्रदाः स्युः ॥ १५ ॥
श्वेता द्विजान्घ्नन्ति नृपांश्च रक्ताः पीताश्च वैश्यानसिताश्च शूद्रान् ॥
चमूपतिं चोर्ध्वमुखाश्च रक्ताः पुरोधसं तेऽपि विचित्रवर्णाः ॥ १६ ॥
अधोमुखा धूमनिभाः क्षितीशान् वृष्टिं पिशंगाश्च तथाविधास्ते ॥
उक्त्वा फलं तामसकीलकानां फलं ततो मंडलवर्णतश्च ॥ १७ ॥
लोहितवर्णो ग्रीष्मे लोकानामीतिरीतिदः शश्वत् ॥
हेमंते व्याधिभयं पीतः प्रावृष्यवृष्टिकृत्कृष्ण- ॥ १८ ॥
आखंडलचापनिभो भूपविरोधं परस्परं तत्र ॥

यदि पत्रनिभो वर्हेद्वादशवर्षं न वर्षति क्षोण्याम् ॥ १९ ॥
शशरक्तनिभो युद्धं राजान्यत्वं विधूपमः सविता ॥
श्यामनिभः कीटभयं भस्मनिभो भयदमासुरं जगतः ॥ २० ॥
भानोरुदयास्तमये चोल्कापतनं महाहवं राज्ञाम् ॥
परिवेषयति प्रकटं पक्षं पक्षार्द्धमेव वा सततम् ॥ २१ ॥
यद्युपसूर्य्यकमस्यां संध्यायामर्घनाशनं प्रचुरम् ॥
क्षितिपतिकलहः शीघ्रं सलिलभयं वा भवेन्नूनम् ॥ २२ ॥
ऋतौ वसंते खलु कुंकुमाभः शुभप्रदः कापिलसन्निभो वा ॥
आनन्ददस्ताम्रनिभो विवस्वान्यः शैशिरे वा कपिलः सुभिक्षः ॥२३॥
ग्रीष्मे सदा हेमनिभो विचित्रवर्णो नृणां क्षेमशुभप्रदश्च ॥
अंभोजगर्भोपमशोभनश्च प्रावृष्यतीवाखिलसस्यवृद्ध्यै ॥ २४ ॥

रक्तः सूर्यः शरदि विपुलाकीर्तिसौभाग्यदश्च ।
हेमंतेऽपि त्वखिलजगतः सस्यसंपद्विवृद्ध्यै ॥
ज्ञात्वा चारं दशशतकरस्याखिलं दैववेदी ।
पश्चात्सर्वं सुशुभमशुभं वा दिशेत्कालरूपम् ॥ २५ ॥

इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां रविचाराध्यायो द्वितीयः ॥२॥

## अथ चन्द्रचाराध्यायः ३ ।

अमृतकिरणचारं खेटचारेषु सारं ।
विपुलनिखिललोकानन्दनं सुंदरं च ॥
सदसदखिललोकाभोगदं यत्फलं त- ।
त्कथितविषमकालज्ञानरूपं प्रवच्मि ॥ १ ॥

असितचतुर्दश्यन्ते प्रतिमासं चास्तमेति तुहिनकरः ॥
सततं दर्शस्यांते तुलितो राश्यादिभिर्नियतम् ॥ २ ॥
विमलः प्रतिपद्यन्ते उदयं संयाति भास्करान्मुक्तः ॥

१ भोगाभोगदम् इति पाठान्तरम् ।

द्वादशभागविवृद्धया तिथयश्चन्द्राच्च संभूताः ॥ ३ ॥
हिमद्युतेरभ्युदितस्य शृंगे याम्योन्नते मेषझषे सुभिक्षम् ॥
जनानुरागं वृषकुंभयोश्च तुल्ये विषाणे जगतोऽखिलस्य ॥ ४ ॥
सौम्योन्नते जिह्व २ मृगास्ययोश्च मासद्वयं स्वास्थ्यमुपैति लोकः ॥
सौम्योन्नते शीतनिभे सुवृष्टिः क्षेमं सदा कर्कटचापयोश्च ॥ ५ ॥
सस्याभिवृद्धिर्हरिकीटयोश्च सौम्योन्नते चापनिभे सुवृष्टिः ॥
अनामया वृष्टिरतीव कन्यातुलाद्वयोः शूलनिभे तथैव ॥ ६ ॥
एवं क्रमेणाभ्युदितः शशांकः क्षेमं सुभिक्षं जगतः करोति ॥
व्यस्तोदितः प्रोक्तफलं समस्तं करोति नाशं कलहं नृपाणाम् ॥ ७ ॥
शृंगे व्रीहियवाकारे वृष्टिः स्यान्महदर्घता ॥
तस्मिन्पिपीलिकाकारे पूर्वोक्तफलनाशनम् ॥ ८ ॥
विशालशुक्के वृद्धिः स्यादविशाले त्वनर्घता ॥
अधोमुखे भूपहानिर्दण्डाकारे नृपाहवः ॥ ९ ॥
नाशं ययुर्नृपतयोऽस्तगतः किराता मंदे हते हिमकरस्य नवे विषाणे ॥
क्षुच्छस्त्रभीतिरतुला निहते कुजे च दुर्भिक्षवृष्टिभयमिंदुसुते हतेऽस्मिन् ॥

श्रेष्ठा नृपा युधि लयं त्वमरेन्द्रवन्द्ये ।
शुक्रे हते नियतमल्पनृपाश्च सर्वे ॥
कृष्णे फलं त्वविकलं भवति प्रजानां ।
पक्षे सिते विफलमेति भवेच्च यद्वा ॥ ११ ॥

वलक्षपक्षः खलु वर्द्धते चेत्क्षेमाभिवृद्धिः सततं द्विजानाम् ॥
कृष्णे विवृद्धौ यदि शूद्रवृद्धिर्व्यत्यासवृद्धौ स्वफलं तथैव ॥ १२ ॥
विश्वाम्बुमूलेन्द्रविशाखमैत्रभानां यदा दक्षिणभागगेन्दुः ॥
वह्नेर्भयं त्वीतिभयं जनानां करोति दुर्भिक्षमतीव युद्धम् ॥ १३ ॥
अनुक्तभानां यदि याम्यवृत्तिं करोति वृष्टिं कलहं नृपाणाम् ॥

---
१ शुक्ले इति पाठान्तरम् ।

प्रजापतेर्भं यदि पैत्रिभं वा भिनत्ति चंद्रोऽन्तकरः प्रजानाम् ॥ १४ ॥
भानां यदा सौम्यगतस्तदानीं जनानुरागं सततं करोति ॥
सदामयाप्रीतिरतीवदुःखं करोति याम्योपगतश्च भानाम् ॥ १५ ॥
पट्र पौष्ण्यभाद्वादश रौद्रधिष्ण्यात्सुराधिपाद्यानि नव क्रमेण ॥
पूर्वार्द्धमध्यापरभागगेन्दुर्भुंक्तेऽखिलव्योमचरास्तथैव ॥ १६ ॥
पूर्वार्द्धधिष्ण्येषु पतिप्रिया स्याद्विवाहिता मध्यमभागगेषु ॥
परस्परं प्रेम तयोर्नृनार्योः परेषु भर्त्ता वनिताप्रियः स्यात् ॥ १७ ॥
जघन्यधिष्ण्यानि जलेशसार्परौद्रेन्द्रयाम्यानिलदैवतानि ॥
अध्यर्द्धधिष्ण्यान्यदितिद्विदैवस्थिराणि शेषाणि समाह्वयानि ॥ १८ ॥
अध्यर्द्धधिष्ण्येऽभ्युदितः शशांकः करोति धान्यं महदर्घमंतम् ॥
जघन्यभेऽनर्घमसंशयेन समर्घमन्येषु च मासि मासि ॥ १९ ॥
ज्ञात्वैवमेवं मणिजीवधातुमूलोर्णकर्पूररसादिकानाम् ॥
अर्घं वदेज्ज्योतिषिकः प्रजानां समर्थवस्तूत्तमसंग्रहार्थम् ॥ २० ॥
एतानि जाघन्यसमाधिकर्क्षाण्यत्रार्घखंडे विनियोजितानि ॥
नोद्वाहजन्मादिषु यत्र चोक्तं तत्राभिवृद्ध्यै विनियोजनीयम् ॥ २१ ॥
प्रालेयकुंदकुमुदामलपुंडरीकशंखप्रतप्तरजतामलवज्रकांतिः ॥
एवंविधोऽभ्युदितशीतकरः प्रजानां क्षेमं सुभिक्षमतुलं कुरुतेऽत्र मासे २२

इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां चंद्रचाराध्यायस्तृतीयः ॥ ३ ॥

## अथ भौमचाराध्यायः ४ ।

यस्माद्विना भूमिसुतस्य चारं शुभाशुभं यज्जगतः सुसम्यक् ॥
न ज्ञायते ज्ञानमनुत्तमं तत्तस्मात्प्रवक्ष्यामि समासतोऽत्र ॥ १ ॥
स स्वोदयर्क्षान्नवमेऽष्टमे वा सप्तर्क्षके वा विचरेत्प्रतीपम् ॥
तद्वक्रमुख्याह्वयमेव तत्र वह्नेर्भयं व्याधिभयं जनानाम् ॥ २ ॥
एकादशे द्वादशभे प्रतीपे दशर्क्षगे वाश्रुमुखं प्रतीपम् ॥

१ बृहत्सतत्व नीत्यर्थः ।

तत्राश्रुवक्रेऽर्घविवृद्धिपूर्वं रसादिकं नाशमुपैति नूनम् ॥ ३ ॥
त्रयोदशर्क्षेऽपि चतुर्दशर्क्षे वक्रे कुजे व्यालमुखाभिधानम् ॥
तेभ्यो भयं तत्र सुवृष्टिसस्यसमृद्धिरर्घं च जनानुरागम् ॥ ४ ॥
प्रतीपगे पंचदशेऽथ धिष्ण्ये धरासुते षोडशधिष्ण्यके च ॥
रक्ताननं नाम भवेत्तु तत्र सुभिक्षमत्यामयशस्त्रवृद्धिः ॥ ५ ॥
अष्टादशे सप्तदशे प्रतीपे निस्त्रिंशपूर्वं मुशलाह्वयं च ॥
तत्रार्घभीतिः क्षितिपालकानां युद्धे क्षयं यांति समस्तलोकाः ॥ ६ ॥
भूमिसुतः फाल्गुन्योरुदयं कृत्वाथ वक्रितो वैश्वे ॥
प्राजापत्येऽस्तमितः करोति निखिलधराभ्रमणम् ॥ ७ ॥
अभ्युदितः श्रवणर्क्षे पुष्ये वक्रं गतो धरातनयः ॥
निखिलधराधिपवर्गप्रलयकरः प्रतिदिनं प्रजानां च ॥ ८ ॥
अभ्युदितः पितृधिष्ण्ये तस्मिन्नेव प्रतीपगः क्षितिजः ॥
पीडां क्षितिपतिमरणं करोति कलहं क्षितीशानाम् ॥ ९ ॥
यस्मिन्दिग्द्वारनक्षत्रे क्षितिजोऽभ्युदयं गतः ॥
तद्दिगीशस्य मरणं यदि तेषु प्रतीपगः ॥ १० ॥
भिनत्ति योगतारां च पितृधातृभयोः कुजः ॥
तदा भूपाहवेर्भूमिर्नूनं भ्रमति चक्रवत् ॥ ११ ॥
विशाखाविश्वधिष्ण्यान्त्यभानां याम्यचरः कुजः ॥
दुर्भिक्षवृष्टिभयकृदाहवे भुवि भूभुजाम् ॥ १२ ॥
शुभदः सर्वधिष्ण्यानां सौम्यमार्गचरः कुजः ॥
अरिष्टफलदः सर्वजन्तूनां याम्यमार्गगः ॥ १३ ॥
मेषसिंहझषचापभसंस्थे वक्रिते क्षितिसुते रविजे वा ॥
गोनराश्वगजपक्षिसमूहं नाशमेति निखिलं च दलं वा ॥ १४ ॥

---

१ मरणम् इति पाठान्तरम् ।

अशोकबंधूकमणिप्रवालसंतप्तताम्रामलकिंशुकाभः ॥
एवंविधः सनुदितो महीजः शुभाय वृद्ध्यै भवति प्रजानाम् ॥ १९ ॥
इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां कुजचाराध्यायश्चतुर्थः ॥ ४ ॥

## अथ बुधचाराऽध्यायः ५।

बुधोदयः सर्वजगद्विपत्त्यै भवेत्कदाचिद्धृशमन्यथा वा ॥
वृष्ट्यर्घवाय्वग्निभयप्रदश्च तेभ्यो भयं कुत्रचिदन्यथा वा ॥ १ ॥
पुरंदरश्रीपतिवैश्वदेववसुस्वयंभूड्डषु चंद्रसूनुः ॥
चरन्करोति प्रचुरार्घवृष्टिं नृपाहवाद्भीतिमतीवपीडाम् ॥ २ ॥
आर्द्रादितिज्याहिमघासु भेषु चरन्प्रजानामतुलां च पीडाम् ॥
करोति शीतांशुसुतो बलीयान्क्षुच्छस्त्रवृष्ट्यामयशत्रुभीश्च ॥ ३ ॥
हस्तद्वयस्वातिविशाखमैत्रसुरेशधिष्ण्यानि हि पीडयन्बुधः ॥
करोति तैलाज्यरसादिवस्तुसमृद्धिदस्तत्र गवादिपीडाम् ॥ ४ ॥
हौतभुगजपादार्यमयाम्यक्षेषु शीतदीधितेस्तनयः ॥
अतिविपुलकरोत्यग्निं भ्रन् देहभृतां सप्तधातुविकलकरः ॥ ५ ॥
वारुणनैर्ऋतपौष्णान्युपमृद्नन् साश्विनानि चंद्रसुतः ॥
सलिलजभेपजतुरगक्रयविक्रयजीविनां च नाशकरः ॥ ६ ॥
विशदं त्वाहिर्बुध्न्यभमेकं चंद्रात्मजो विमृद्नीयात् ॥
विपुलामयशस्त्रभयं क्षुद्भयमतुलं प्रजानां च ॥ ७[१] ॥
प्राकृतमिश्रसंक्षिप्ततीक्ष्णयोगांतिकघोरपापाश्च ॥
सप्तविधा गतिभेदा हिमकरतनयस्य विविधफलदाः स्युः ॥ ८ ॥
अनिलानलकमलजयमधिष्ण्यैः स्यात्प्राकृताभिधानगतिः ॥
पितृशशिशंकरभुजगैर्धिष्ण्यैर्गतिरपरा मिश्रसंज्ञा च ॥ ९ ॥
भाग्यद्वितयादितिभद्वितयैः संक्षिप्तसंज्ञिका विपुला ॥

---

१ क्षुद्र इति वा पाठः ।

भाद्रपदद्वयवासवभद्वितयैश्च विमलतीक्ष्णाख्या ॥ १०
योगांतिकगतिरतुला नैर्ऋतमारभत्रितये ॥
श्रवणत्रितयं त्वाष्ट्रभमृक्षचतुष्कं च घोरसंज्ञा सा ॥ ११ ॥
दिनकरमित्रविशाखाभत्रितयं भवति पापरूपाख्या ॥
प्राकृतगत्यां राजप्रवृद्धिरारोग्यसस्यवृद्धिः स्यात् ॥ १२ ॥
मित्रविरोधः सततं भवति तयोः क्षिप्रमिश्रयोर्गत्योः ॥
अपरासु गतिषु नियतं विपरीतं भवति सर्वजंतूनाम् ॥ १३ ॥
विकला ऋज्व्यनुवक्रा वक्राख्या बोधनस्य गतिभेदाः ॥
विविधफलं तासु करोत्यविकलमेवं बलीयांश्चेत् ॥ १४ ॥
शस्त्रभयामयजननी विकला ऋज्वी च देहिनां शुभदा ॥
अर्थविनाशनकरी त्वनुवक्रा भूपयुद्धदा वक्रा ॥ १५ ॥
आषाढमासद्वितये सपौषे वैशाखमासे यदि चन्द्रसूनुः ॥
दृष्टः करोत्यामयराजपीडां विवर्षणं तस्करभीतिमुग्राम् ॥ १६ ॥

माणिक्यशङ्खकनकामलपुष्पराग- ।
कुन्देंदुसन्मरकतोपमशुद्धकांतिः ॥
स्निग्धः शशांकतनयः प्रचुरार्थदश्च ।
लोकेऽन्यमूर्तिरुदितो भयरोगकृत्सः ॥ १७ ॥

इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां बुधचाराध्यायः पंचमः ॥ ५ ॥

---

## अथ गुरुचाराध्यायः ६ ।

मासेषु चोर्जादिषु कृत्तिकादिद्वयं द्वयं च क्रमशोऽश्विभात्स्यात् ॥
त्रिभान्नभस्येपतपस्यमासाः शुक्रांतयुक्तर्क्षवशादजस्रम् ॥ १ ॥
उदेति धिष्ण्येन सुरेन्द्रमंत्री तेनैव तन्नाम भवेत्तु वर्षम् ॥
ज्ञेयानि तत्कार्तिकपूर्वकाणि भवंति तेषां च फलं च सम्यक् ॥ २ ॥

---

१ पुस्तकान्तरेऽप्ययमेव पाठो दृश्यते तत्र कतिपयवर्णानां द्विरुक्तत्वं तथाऽभावोऽवगम्यते तत्सुधीभिरपरपुस्तकोपलब्ध्या स्वबुद्ध्या वा निरीक्षणीयम् ।

सितरक्तहरितपीतद्रव्याणां वृद्धिरतुला स्यात् ॥
शकटक्रूपीवलवणिजां पीडा स्यात्कार्तिके वर्षे ॥ ३ ॥
सौम्येऽब्दे सस्यानां भयमीतिभ्यो निरन्तरं जगति ॥
पौषे निवृत्तवैरा राजानो व्याधिपीडितास्त्वपरे ॥ ४ ॥
माघे सस्यविवृद्धिर्महदर्घं कर्म पौष्टिकं प्रचुरम् ॥
सुरपितृपूजावृद्धिर्भवति जनानां च हार्दितो भीतिः ॥ ५ ॥
फाल्गुनमासे वृद्धिः क्वचित्क्वचित्तद्वदर्घसस्यानि ॥
जन्तूनामारोग्यं परस्परं हंतुमुद्यता भूपाः ॥ ६ ॥
चैत्रे स्त्रीजनहानिः क्रोधवशा भूमिपालकाः सर्वे ॥
क्षेमं सुभिक्षमतुलं प्रीतिर्द्विजसाधुजन्तूनाम् ॥ ७ ॥
द्विजपशुसज्जनवृद्धिर्वैशाखे शान्तिसंयुताः सर्वे ॥
अध्वरनिरताः सर्वे भूसुरनिकराश्च सस्यसंपूर्त्तिः ॥ ८ ॥
ज्येष्ठेऽब्दे निखिलजनाः स्वे स्वे कर्मप्रवर्त्तका जगति ॥
सततं ज्ञातिषु वैरं कुर्वन्त्यवनीश्वरा न तथा ॥ ९ ॥
आषाढेऽब्दे प्रचुरं पीड्यंते सर्वसस्यानि ॥
कृमिकीटादिभिरतुलं त्वपरं सस्यं च वृद्धिमाप्नोति ॥ १० ॥
श्रावणवर्षे क्षेमं सस्यान्यखिलानि पाकमुपयांति ॥
राजक्षोभैरतुलं निखिलजनाः पीडिताः सततम् ॥ ११ ॥
भाद्रपदेऽब्दे पंडास्तद्भक्ता ये च ते निपीड्यंते ॥
पूर्वं यत्सस्यश्च निखिलं निष्पत्तिमुपयांति ॥ १२ ॥
आश्वियुजेऽब्दे वृष्टिर्भवति च नाना निरामयं क्षेमम् ॥
अपरं सस्यं न स्यात्क्कुत्रचिदीतिः प्रजापीडा ॥ १३ ॥
भानौ यदा सौम्यगतिः सुरेज्यस्तदा जनानामभयप्रदः सः ॥
व्याधिप्रदो दक्षिणमार्गगामी भूदेवभूमीश्वरनाशदश्च ॥ १४ ॥
वह्नेर्भयं वह्निसमानवर्णः पीतश्च रोगं हरितोऽरिभीतिम् ॥

श्यामस्तु युद्धं सततं करोति रक्तः क्षितीशद्विजकामपीडाम् ॥ १५ ॥
वृष्टेर्भयं धूमनिभः पिशंगस्त्वीतेर्भयं कांस्यनिभोऽन्नभीतिम् ॥
क्षिप्रं नृपस्यांतकरो ह्यदृष्टश्चित्रो विचित्रं क्षितिपालयुद्धम् ॥ १६ ॥
वह्निभाद्वितयमब्दशरीरं नाभिरस्य जलवैश्वदैवभम् ॥
सार्थभं हृदयमंतरात्मकं पैतृभं विकसितं सुमनश्च ॥ १७ ॥
क्रूरग्रहे चास्य शरीरसंस्थे वह्नेर्भयं वायुभयं च तत्र ॥
नाभिस्थितेऽनर्घभयं प्रभूतं हृदि स्थिते सस्यभयं जनानाम् ॥ १८ ॥
मनस्थिते मूलफलं विनाशं वक्रग्रहस्थे फलमुग्रमेतत् ॥
सौम्यग्रहेष्वेषु च संस्थितेषु सर्वं शुभं मिश्रफलं च मिश्रैः ॥ १९ ॥
सुरेज्ययाता भगणाः श्रुतिघ्ना नखैरवाप्ताः श्रुतिरामहीनाः ॥
विभाजिताश्चामरवर्त्मतर्कैः६० शेषाः स्युरत्र प्रभवादयोऽब्दाः ॥२०॥
प्रभवो १ विभवः २ शुक्लः ३ प्रमोदो४ऽथ प्रजापतिः ५ ॥
अंगिराः ६ श्रीमुखो ७ भावो ८ युवा ९ धाता १० तथेश्वरः ११ ॥२१॥
बहुधान्यः १२ प्रमाथी च १३ विक्रमो १४ वृषवत्सरः १५ ॥
चित्रभानुः१६ सुभानुश्च १७ तारणः१८ पार्थिवो १९ व्ययः२० ॥२२॥
सर्वजित् २१ सर्वधारी च २२ विरोधी २३ विकृतः २४ खरः २५ ॥
नंदनो २६ विजय २७ श्चैव जयो २८ मन्मथ २९ दुर्मुखो ३० ॥ २३ ॥
हेमलंम्बो ३१ विलम्बश्च ३२ विकारी ३३ शार्वरी ३४ प्लवः ३५ ॥
शुभकृ ३६ च्छोभकृ३७ त्क्रोधी ३८ विश्वावसु ३९ पराभवो४० ॥२४
प्लवंगः ४१ कीलकः ४२ सौम्यः४३ साधारण ४४ विरोधकृत् ४५ ॥
परिधावी४६ प्रमादी४७ स्यादानंदो४८ राक्षसो४९नलः ५० ॥२५॥
पिङ्गलः ५१ कालयुक्तश्च ५२ सिद्धार्थो ५३ रौद्र ५४ दुर्मती ५५ ॥
दुंदुभी५६ रुधिरोद्गारी५७ रक्ताक्षी ५८ क्रोधनः ५९ क्षयः ६० ॥२६॥
अब्दैर्युगं पंचभिरब्दषष्ट्या युगानि च द्वादश वै भवंति ॥

---

१ हेमलम्बी इति पाठः । २ विलम्बी च इति वा पाठः ।

पंचाब्दनाथाः क्रमशो युगस्य वह्न्यर्कचंद्राब्जजशंकराः स्युः ॥ २७ ॥
कृष्णः सूरिस्त्विंद्रो ज्वलनस्त्वष्टा चाहिर्बुध्न्यः पितरः ॥
विश्वे चंद्रस्त्विन्द्रो दहनस्त्वश्विन्याख्यो भगस्त्वपरः ॥ २८ ॥
अब्दे प्रवृत्ते प्रभवेऽग्निकोपः संतीतयः पैत्तकफाश्च रोगाः ॥
स्तोकं जलं मुंचति वारिवाहः सदा प्रमोदंति जनाश्च सर्वे ॥ २९ ॥
वृष्टिः प्रभूताखिलसस्यवृद्धिर्जनानुरागं विभवे प्रवृत्ते ॥
अन्योऽन्ययुद्धैः क्षितिपालकानां न दुःखमाप्नोति जनस्तथापि ॥ ३० ॥
अन्योऽन्यरत्यातिशयादजस्रं रामाः प्रपंचे रमयंति रामान् ॥
गोधूमशालीक्षुमती धरित्री निवृत्तवैरा भुवि शुक्लवर्षे ॥ ३१ ॥
प्रमोदवर्षे सुजना नृपाश्च मोदंति पापाभिरताः सचौराः ॥
सीदंति पृथ्वी बहुसस्यपूर्णा विवैरिणः सर्वजना धरित्र्याम् ॥ ३२ ॥
गावः प्रभूतपयसः सकला धरित्री मेघैर्विसृष्टसलिलैः परिपूर्णवप्रा ॥
आरामसंवृतपुरौघविचित्रितांगी तुष्टाः प्रजापतिवरे परिपूर्णलोकाः ३३॥
धात्री सुरप्रवरयज्ञवरौघपूर्वैः पूर्णातिरम्यपुरसंघविचित्रितांगी ॥
अब्दे यदांगिरसि भूरिजनैर्विकीर्णा शश्वत्सुवृष्टिनिकरैश्च तडागपूर्णा ३४
विचित्रसस्यांबरचित्रवर्णा गुल्मस्तनी पूर्णतडागपूर्णा ॥
क्रीडावनाढ्या फलपुष्पवक्त्रा भूः श्रीमुखेऽब्दे वनितेव भाति ॥ ३५ ॥
वापीकूपतडागपूर्तिरतुला स्वस्थाः क्षितीशाः क्षितौ ।
देवस्पर्द्धिजनैः सुसस्यनिकरैर्नानाविधैराकरैः ॥
धात्री भाति निरंतरं शुकपिकश्रीकण्ठपुंस्कोकिल- ।
भ्राजत्षट्पदनादमण्डितवनैर्भावाह्वयेऽब्दे सदा ॥ ३६ ॥
प्रकीर्णकामाः प्रमदा युवेऽब्दे गोधूमशालीक्षुफलैर्नियुक्ता ॥
चौरामयव्यालभयं प्रभूतं तथापि नंदंति न दुःखमेति ॥ ३७ ॥
अब्दे विधातुः सकला धरित्री प्रदायिनी सर्वजनेप्सितार्थान् ॥

---

१ संरोगाः इति वा पाठः ।

भूदेवभूभृन्निकराश्च सर्वे मखक्रियाद्युत्सवतत्पराः स्युः ॥ ३८ ॥
पोषयतीश्वरवर्षे धात्री धात्रीव निखिलजनान् ॥
धात्रीपतयः सर्वे क्षुभ्यंत्यनिशं परस्परं क्षोभात् ॥ ३९ ॥
बहुधान्याब्दे सततं बहुधान्ययुतं धरातलं निखिलम् ॥
पित्तकफानिलजाता बहुधा रोगास्तथाविधास्तत्र ॥ ४० ॥
निखिला धरणी सहिता रथतुरगगजादिभिर्बहुभिः ॥
कुत्रचिदर्घं प्रचुरं न कुत्रचिद्घनरसं प्रमाथ्यब्दे ॥ ४१ ॥
अनुपमविक्रमधरणीनाथैराक्रांतवसुमती सकला ॥
विक्रमवर्षे सुजना वर्द्धंते विक्रमैः स्वैः स्वैः ॥ ४२ ॥
वृषभनिभा वृषभाब्दे क्षितिपतयः सप्रजाः स्वस्थाः ॥
बहुविधसस्यसमृद्धिः कृषिजनमतवृष्टिरतुला स्यात् ॥ ४३ ॥
नानाविधैः सस्यविचित्रिता भूर्विचित्रभानौ भुवि चित्रवृष्टिः ॥
अन्योऽन्ययुद्धैः क्षितिपालकानां कपालकेशास्थिकबंधचित्रा ॥ ४४ ॥
सुभानुवर्षे प्रतपत्यजस्रं भानुः क्षितिर्मध्यमसस्ययुक्ता ॥
शस्त्राग्निकोपैः प्रचलंति मर्त्यास्तथापि नो भीतिमवाप्नुवंति ॥ ४५ ॥
तरंति दुःखान्यपि तारणाब्दे जनाः प्रमोदंति सपुत्रमित्रैः ॥
यथेप्सितं वर्षति जंभभेदी तथापि सीदत्यपरं च सस्यम् ॥ ४६ ॥
ये पार्थिवेंद्रा विलयं ययुस्ते युद्धेषु सर्वे सुखिनः पुरे स्युः ॥
मुंचंति तोयं प्रचुरं पयोदा भीतिर्ज्वरेभ्यः खलु पार्थिवेऽब्दे ॥ ४७ ॥
व्ययान्विताः सर्वजना व्ययाब्दे निरन्तरं वारिमयी धरित्री ॥
धर्मप्रसक्ताः खलु पार्थिवेन्द्राः सीदंति ये पापपरा सचौराः ॥ ४८ ॥
सर्वजिदब्दे निखिलं जगत्सदानंदसुन्दरोपेतम् ॥
भूभुजनिकरविकारैः प्रकटितबहुदुःखतामेव ॥ ४९ ॥
वारिधरा वारिचयं मुंचत्यल्पं क्वचित्क्वचिद्बहुलम् ॥
अवनीपालकसंयतिनिस्खलिता भूश्च सर्वधार्येऽब्दे ॥ ५० ॥

भूपसंक्षोभसंभूतभूरिभीतिभुजः प्रजाः ॥
सर्वस्वापहृताश्चौरैर्विरोध्यब्दे विदेशगाः ॥ ५१ ॥
प्रकृतिः प्रयाति विकृतिं विकृतिरपि प्रकृतिमायाति ॥
वर्षे विकृते सुजना निशाचरार्थप्रदा धरणी ॥ ५२ ॥
नृपाः खराऽब्दे भुवि विक्रमेण सापत्न्यराष्ट्रान्प्रचलंति हंतुम् ॥
रथेभपत्यश्वबलैर्वृतास्ते धात्री जनानंदफलप्रदा स्यात् ॥ ५३ ॥
आनंददा सुंदरनंदनाब्दे संपूर्णसस्यामितवारिवाहैः ॥
फलैर्विचित्रामितपुष्पवृंदैर्धरात्यसस्यादिफलं विनष्टम् ॥ ५४ ॥
अतुलबलसमृद्धं पार्थिवेन्द्रस्य चक्रं ।
पुरविषयहयादीन्हंतुमुद्यच्च नित्यम् ॥
प्रचलति भुवि चैवं तेऽपि सर्वे चलंति ।
क्षितिरपि विजयाब्दे सस्यसंपूर्णरम्या ॥ ५५ ॥
यस्मिञ्जयाब्दे विरलार्घसस्या बलाधिका गोऽजवृषाश्वनागाः ॥
तथा धरार्धाशिमहारणैश्च सीदंति गौडाः खलु गुर्जराश्च ॥ ५६ ॥
जृंभंति सर्वे विविधान्नपानैः कामोपचारैः पशवो मृगाश्च ॥
ते मन्मथाब्दे सवराः सचौराः सीदंति संन्यासिजना ह्यलब्धाः ॥ ५७॥
सुदुर्मुखाब्दे प्रलयं प्रयांति सस्यार्घधात्रीपतिमुख्यविप्राः ॥
प्रव्राजकव्रातकिरातचौरा लैंग्याश्च सर्वे खलु वर्द्धयंति ॥ ५८ ॥
धरामरा गोकुलराजवृंदा धर्मप्रसक्ताः खलु हेमलंबे ॥
सीदंति सर्वे विरलार्घसस्यैरवृष्टिभिः क्षुद्भयपीडिताश्च ॥ ५९ ॥
विलंबिवर्षे त्वरिवृन्दरोगैः स्वल्पार्घवृष्ट्युद्धतचौरसंघैः ॥
निस्वाः प्रजाः सत्वविहीनमानविदेशगाः स्वोदरपूरणाय ॥ ६० ॥
स्तोकं जलं मुंचति वारिवाहस्तथापि नानाविधसस्यपूर्णा ॥
विकारिवर्षे निखिला जनास्ते जीवंति नानाविधवृक्षमूलैः ॥ ६१ ॥
शार्वरीशरदि भाति मेदिनी पूर्णसस्यजनवृंदसंकुला ॥

अध्वरोत्सुकधराऽमरपूर्णा धर्ममार्गरतभूपकुलैश्च ॥ ६२ ॥
शुभकृच्छरदि विभाति क्षितिरतुलैर्मखमहोत्सवैः सततम् ॥
नीतिपथक्षितिपतिभिर्बहुविधसस्यार्घवृष्टिभिः सकला ॥ ६३ ॥
शोभकृति क्षितिपतयो जृंभंते विविधसैन्ययुताः ॥
क्षितिरपि भाति सुपुष्पितफलितवनारामतोयांशैः ॥ ६४ ॥
प्लववर्षे निखिलजनाः स्थलजलभवपण्यजीविनस्तत्र ॥
बहुवृष्टिभिरखिलधरा प्लवसदृशा भवति जलमध्ये ॥ ६५ ॥
क्रोधिनि शरदि निरन्तरक्षितिपतिकलहैर्विहीनधनाः ॥
फलमूलाशनवशगास्तथापि लोकाश्च वर्द्धन्ते ॥ ६६ ॥
विश्वावसौ विविधसस्ययुता धरित्री नानाकरैः प्रचुरतोयदमेघवृंदैः ॥
नानाविधक्रतुवरेषु विचित्रनादैर्भात्यंगवंगमगधा निहताश्च चौरैः॥६७॥
परिभवजनितक्लेशैर्निःसाराः सप्रजाः क्षितिपाः ॥
अतुलितसस्यसमृद्धां भूमिं भुक्त्वा पराभवाब्देऽपि ॥ ६८ ॥
अब्दे प्लवंगे प्रमदाजनास्तु कुर्वन्ति वैरं पुरुषेषु नित्यम् ॥
धराधिपक्षोभविघट्टिताभूस्तदा न संपूर्णफलप्रदायिनी ॥ ६९ ॥
अवृष्टिचोराहवरोगवह्निभीतान् जनान्वीक्ष्य सुकीलकाब्दे ॥
भूर्जीवयामीति कथं विचार्य विचित्रनानाकरदा च तेभ्यः ॥ ७० ॥
सुवृष्टिसस्यार्घधरा विभाति धर्मप्रसक्तक्षितिपोत्सवाद्यैः ॥
स्वमार्गसंसक्तजनैरजस्रं सौम्याह्वयाब्दे प्रविनष्टदोषैः ॥ ७१ ॥
विविधामयचोरभयं मध्यमवृष्ट्यर्घसस्यभयम् ॥
भुवि साधारणवर्षे निखिलजनानां च चोरभयम् ॥ ७२ ॥
कलहो निखिलजनानामीतिभयं स्याद्विरोधकृद्वर्षे ॥
धरणी सस्यसमृद्धाऽप्यविकलफलदायिनी सततम् ॥ ७३ ॥
शुभफलदा परिधाविन्यतुलितबहुसस्यवृद्धिः स्यात् ॥
निखिलधराऽऽमयरहिता मध्यमदेशस्य नाशः स्यात् ॥ ७४ ॥

सस्यानामीतिभयं क्षुद्भयमखिलप्रजानां च ॥
चोरभयं धनिकानां राजभयं च प्रमाद्यब्दे ॥ ७५ ॥
आनंददः स्थावरजंगमानामानंदवर्षे विविधान्नपानैः ॥
तत्रातिरोगैर्विलयं प्रयान्ति कलिंगवंगाखशमाहिपाश्च ॥ ७६ ॥
रथाश्वहेमांबरलोहकारा वृद्धिं प्रयांत्यारकजीविनश्च ॥
विप्राः क्षितीशाः सुजनाः सुवृत्ता ये राक्षसाब्दे प्रभवंति निस्वाः ॥ ७७ ॥
यस्मिन्नलाब्दे विलयं प्रयांति मृगाश्च पक्षिव्रजकोकिलाश्च ॥
अन्ये च सर्वे नरगोकुलाद्याः प्रयांति वृद्धिं खलु मध्यदेशाः ॥ ७८ ॥
ईतिभयं चोरभयं पिंगलवर्षे भवेन्न शत्रुभयम् ॥
स्तोकजलं निखिलभुवि द्विजसज्जनवैरमन्योन्यम् ॥ ७९ ॥
कालयुगाब्दे संततं विवैरिणाः सर्वधात्रीशाः ॥
अध्वरनिरता विप्राः क्वचित्क्वचिच्चौरवाह्निभयम् ॥ ८० ॥
सुधातलमखिलं यद्बहुविधधान्यार्घसंपूर्णम् ॥
विविधामयसर्पभयं वर्षे सिद्धार्थिसंज्ञे च ॥ ८१ ॥
युद्ध्यन्ति क्षितिपतयः परस्परं हंतुमुद्यताः सर्वे ॥
कोंकणदेशाक्षितिपतिनिधनं तत्रैव रौद्राब्दे ॥ ८२ ॥
दुर्मतिवर्षे वर्षति पर्जन्यः सततमंबुधाराभिः ॥
निखिलजनानां हाटकमखिलं गृह्णन्ति कितवचोराश्च ॥ ८३ ॥
दुंदुभिवर्षे सततं विविधोत्सवनादपूरिता धरणी ॥
विविधफलसस्यपूर्णा विविधामयसंयुता नूनम् ॥ ८४ ॥

युद्धे भटप्रतिभटास्त्रविखंडितानां ।
रक्तं पिबंत्यनुदिनं वसुधाधिपानाम् ॥
यस्मिन् सदा रुधिरमुद्गिरति प्रवर्षे ।
तस्मिन् सदा विरलसस्ययुता धरित्री ॥ ८५ ॥

रक्ताक्षिवर्षे सततं महीशाः परस्परं क्रोधपरा न योधाः ॥
विश्वंभरा चोत्तमसस्यपूर्णा क्वचित्तदा नैवमहीनसस्या ॥ ८६ ॥
गोधूमशाल्यादिवरेक्षुवाटनानाविधोद्यानतडागवप्रैः ॥
तैः क्रोधनाब्दे सकला धरित्री तथा न संतोषकरी जनानाम् ॥ ८७ ॥
नरानजानश्वखरोष्ट्रपक्षिमृगांश्च नागाखिलभूतराशीन् ॥
त्रिभागशेषं कुरुते क्षयाब्दे मही त्वनावृष्टिनृपाहवैश्च ॥ ८८ ॥
मेषगते सुरसचिवे मेषविनाशो भवेदचिरात् ॥
अतुलितसस्यसमृद्धिः क्षितिपतिकलहः प्रजायते क्षोभः ॥ ८९ ॥
शिशुपशुवनितानिचयो विलयं यांति द्वितीयगे जीवे ॥
क्षितिपतिकलहैः सततं मध्यमसस्यार्घदा धरणी ॥ ९० ॥
कलहरतक्षितिपतयो वारिधराश्चापि कुत्रचिज्जलदाः ॥
सस्यानां भवति भयं त्वांगिरसे मिथुनराशिस्थे ॥ ९१ ॥
अतुलितसस्यसमृद्धा भवति धरा वारिदाः पयोवाहाः ॥
निवसति कर्कटराशौ प्रभूतपयसस्तदा गावः ॥ ९२ ॥
विलयं यान्त्यवनीशाः संयति सुजनाऽवनीसुरा निस्वाः ॥
अनुपमवृष्टिभिरखिलं धरातलं वारिपूरितं हरिगे ॥ ९३ ॥
अतुलितविभूतिसहिताः क्षितिपतयः सप्रजा नियतम् ॥
भूसुरनिकराः सततं वाध्वरनिरता भवंति युवतिस्थे ॥ ९४ ॥
तुल्योद्धतवस्तुचयं दुर्लभमखिलं तुलागतेऽगिरसि ॥
सुलभं त्वितरद्रव्यं तूत्तमसस्यार्घवृद्धिः स्यात् ॥ ९५ ॥
बहुवृष्टिभिरखिलधरा बहुविधधान्यार्घसंपूर्णा ॥
वृश्चिकराशौ जीवे सर्वे सुखिनोऽन्त्यजातिविलयः स्यात् ॥ ९६ ॥
संकरशबरनिशाचरनिधनं सुखिनः परे गुरौ धनुषि ॥
अचलाचलसदृशांबुदनिकरैः संपूर्णवारिमयी ॥ ९७ ॥
गुरौ मृगस्थेऽम्बुधराः प्रकामं वर्षंति वाप्योघतडागपूर्णा ॥

शरीरिणां स्थावरजंगमनामानंददाभीष्टफलैर्धरित्री ॥ ९८ ॥
विवैरिणाः सर्वधराधिनाथाः सीदंति पापाश्च कलिंगगौडाः ॥
कुंभस्थिते देवगुरौ धरित्री पुष्पैः फलैरुत्तमसस्यरम्या ॥ ९९ ॥
नानाविधोद्यानतडागसस्यमहोत्सवानेकमखक्रियाद्यैः ॥
मीनस्थिते देवगुरौ धरित्री रम्या क्षितीशाः सुखिनः प्रजाश्च ॥१००॥
कुंदेंदुशंखस्फटिकप्रवालनीहारमुक्ताफलसन्निभाभः ॥
एवंविधो देवगुरुर्जनानां शुभप्रदः क्लेशनिवारकश्च ॥ १०१ ॥

इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां गुरुचाराध्यायः षष्ठः ॥ ६ ॥

---

## अथ शुक्रचाराध्यायः ७ ।

मध्यमरेखानियतं गोवीथिर्भवति मध्यरेखातः ॥
वृषभैरावतगजनागाख्या वीथयः कुबेरदिग्भागे ॥ १ ॥
दक्षिणतोऽपि जरद्गवमृगाजदहनाश्च नवभेदाः ॥
वीथेरेकैकस्यार्क्षत्रितयं क्रमेण धिष्ण्यानि ॥ २ ॥
दिनकरधिष्ण्यात्रितयं गोवीथिगतं द्विदैवधिष्ण्यातः ॥
द्वादश भानि क्रमशो दक्षिणवीथेश्चतुष्टयस्थानि ॥ ३ ॥
आश्विनभाद्द्विद्वादशधिष्ण्यान्युत्तरवीथेश्चतुष्टयस्थानि ॥
अथ कथयामि नवानां वीथीनां फलानि तान्यधुना ॥ ४ ॥
नागवीथिविचरन्भृगोः सुतः पश्चिमदिशि च वृष्टिनाशकृत् ॥
क्षेमकृत्सुखकरो गजवीथ्यामर्घवृद्धिमतुलां करोति सः ॥ ५ ॥
शालीक्षुगोधूमयवादिसस्यसंपूर्णधात्री नितरां विभाति ॥
ऐरावतोक्षाह्वययोश्च वीथ्योः स्थिते सिते संयति राजनाशः ॥ ६ ॥
गोवीथिगे दैत्यपुरोहिते भूर्विभाति नानाविधसस्यवृद्ध्या ॥
जरद्गवायां मृगसंज्ञितायां मध्यार्घवृष्टिर्महदाहवश्च ॥ ७ ॥
क्षितीशसंग्रामजभीतिरीतिर्वह्निभयं वारिभयं जनानाम् ॥

अजाग्निवीथ्योरतुलाग्निभीतिः क्वचित्क्वचिद्वर्षति वासवोऽपि ॥ ८ ॥
उदग्वीथिषु दैत्येज्यश्चास्तगश्चोदितोऽपि वा ॥
सुभिक्षकृन्मध्यवीथ्यां सामान्यो याम्यगोऽशुभः ॥ ९ ॥
स्वातित्रये पूर्वदिशि पश्चिमे पितृपंचके ॥
अनावृष्टिकरः शुक्रो विपरीतः सुवृष्टिकृत् ॥ १० ॥
दृष्टः समस्तदिवसे भयदश्चामयोद्भवः ॥
दिनार्द्धं प्रति दृष्टश्चेत्परेषां बलभेदकृत् ॥ ११ ॥
भिनत्ति रोहिणीचक्रं शुक्रः पैतृभतारकाम् ॥
यदा तदा करोत्येनां कपालास्थिमयीं धराम् ॥ १२ ॥
कृष्णाष्टम्यां चतुर्दश्याममायां यदि भार्गवः ॥
उदयं चास्तमानं च करोत्यंबुमयीं क्षितिम् ॥ १३ ॥
प्राक्पश्चिमस्थौ सुरदानवेज्यौ परस्परं सप्तमराशिसंस्थौ ॥
तदा जनानां भयदो जलाग्निरोगास्त्रचौराग्निनिशाचरेभ्यः ॥ १४ ॥
अग्रगाः पृष्ठगा वापि खेटाः सन्निहिता रवेः ॥
तदाऽतिवृष्टिं कुर्वंति न चेन्नीचारिराशिगाः ॥ १५ ॥
चत्वारः पंच वा खेटा बलिनस्त्वेकराशिगाः ॥
राजाहवभयं दद्युरर्घमामयभीतिदाः ॥ १६ ॥
यदा प्रतीपगौ खेटौ नृपसंक्षोभदौ तदा ॥
प्रतीपगास्त्रयो यत्र युद्धवृष्टिभयप्रदाः ॥ १७ ॥
राजान्यत्वं च कुर्वंति चत्वारो यदि वक्रिताः ॥
प्रतीपगाः पंच खेटा राजराष्ट्रविनाशदाः ॥ १८ ॥
चक्रेन्दुकुंदकुमुदस्फटिकप्रवालवैडूर्यशंखदधिपुष्पहिमोपमाभः ॥
मुक्ताफलप्रकरतुल्यविशालकांतिरेवंविधो भृगुसुतः शुभदो नराणाम् १९

इति वृद्धवसिष्ठमहर्षिविरचितायां संहितायां शुक्रचाराध्यायः सप्तमः ॥ ७ ॥

---

## अथ शनिचाराध्यायः ८।

रौद्रार्कवारीशमरुद्विदैवसुकुंदभेष्वश्वर्कसुतः करोति ॥
चरन् सुभिक्षं विपुलं पृथिव्यां गौडाश्मकाश्मीरपुलिन्दहानिः ॥ १ ॥
मैत्राख्यसंक्रंदनपौष्णभेषु चरन् सदा सूर्यसुतः करोति ॥
ईतेर्भयं व्याधिभयं प्रजानां कलिंगबाह्लीकजनाभिवृद्धिम् ॥ २ ॥
तयोरहिर्बुध्न्यभयाम्ययोश्च धराधिपानां कलहस्त्ववृष्टिः ॥
अनुक्तभेष्वर्कसुतः प्रजानां चरन् तदा मध्यमवृष्टिदः स्यात् ॥ ३ ॥
कीटाजपश्चाननकर्कटेषु चरञ्छनिः क्षुद्रपदः प्रजानाम् ॥
वृष्टेर्भयं कुत्रचिदामयश्च तथापि जीवंति जनाः कथंचित् ॥ ४ ॥
कन्यानृयुग्गोघटचापसंस्थः स्वक्षेत्रसंस्थोऽपि शुभप्रदः स्यात् ॥
वगांगकाश्मीरकलिंगगौडसौराष्ट्रदेशेष्वशुभप्रदः स्यात् ॥ ५ ॥
प्रक्षुभ्यंति क्षितीशाः प्रचलितवसुधा मोदते दस्युवर्गो ।
धीभ्रंशो बुद्धिभाजां जनपदहरणं चित्रवर्षी पयोदः ॥
चंद्रार्कौ मंदरश्मी ग्रहगणसहितो वांति वाताः प्रचंडा- ।
श्चक्राकारं समग्रं भ्रमति जगदिदं मीनगे सूर्यसूनौ ॥ ६ ॥

इति वृद्धवसिष्ठमहर्षिविरचितायां संहितायां शनिचाराध्यायोऽष्टमः ॥ ८ ॥

---

## अथ राहुचाराध्यायः ९।

प्रच्छन्नामररूपं धृत्वा राहुः सुधाप्रदानेऽभूत् ॥
हरिरपि निखिलं ज्ञात्वाच्छिनद्धि चक्रेण तच्छीर्षम् ॥ १ ॥
अमृतमयत्वान्नत्वा हरिं शिर उवाच विस्मिते सदसि ॥
दातव्या ग्रहसमता गतोऽस्मि मां रक्ष तव शरणम् ॥ २ ॥
दत्त्वाष्टमग्रहत्वं प्रीतो विससर्ज तं राहुम् ॥
धातृवराच्चंद्रमसं तुदति ततः सर्वपर्वणि च ॥ ३ ॥
अवनतिविक्षेपवशाद्दूराद्दूरं गतः सततम् ॥

षण्मासांसाभ्यन्तरिताद्ग्रहणं प्रायेण संभवति ॥ ४ ॥
राहुरसो दनुजत्वाद्भुजमाकारेण गृह्णाति ॥
भूगोलाधोभागे दर्पणसदृशे रवौ सदा भ्रमति ॥ ५ ॥
उद्भूताखिलधरणीछाया छादयति सेन्दुमुपरिस्थम् ॥
स्थगयति रविमुपरिस्थं पश्चादागत्य शीघ्रगश्चंद्रः ॥ ६ ॥
गणितस्कन्धाज्ज्ञात्वा सृष्ट्यादेरिष्टपर्वपर्यंतम् ॥
पर्वसमूहं यत्तत्सप्तभिरवशिष्टपर्वेशाः ॥ ७ ॥
धातृशशीन्द्रकुबेरा वरुणाऽग्नियमाश्च विज्ञेयाः ॥
एषां पर्वेशानां क्रमशस्तु फलानि वक्ष्यंते ॥ ८ ॥
ब्राह्म्ये पर्वणि सम्यग्द्विजगोपसुवृद्धिरपरिमिता ॥
सौम्ये पर्वणि तद्वत्सज्जनहानिस्त्ववृष्टिजाद्भीतिः ॥ ९ ॥
शारदसस्यविनाशः क्षितिपतिकलहः सुवृष्टिरैन्द्रे स्यात् ॥
धनिकानां धनहानिस्त्वतुला वृष्टिश्च कौबेरे ॥ १० ॥
निखिलजनानां वृद्धिः क्षेमकरी वारुणे च नृपहानिः ॥
आग्नेये चाग्निभयं त्वतुला वृष्टिः क्षितीशकलहश्च ॥ ११ ॥
दुर्भिक्षकरं याम्यं लोकानां भीतिदं सततम् ॥
पर्वाधिपफलमुक्तं यत्तज्ज्ञातव्यं चेन्द्विनोर्ग्रहणे ॥ १२ ॥
यद्येकस्मिन्मासे चन्द्रार्कोपप्लवो यदा भवति ॥
आतङ्कानर्घभयं क्षितिपतिकलहं विजानीयात् ॥ १३ ॥
उदगयनेऽर्कग्रहणं भवति च यदि वा शशांकस्य ॥
द्विजसज्जननृपहानिर्भवति परेषां च दक्षिणे त्वयने ॥ १४ ॥
ग्रस्तोदयगेऽस्तमिते शारदसस्यावनीशनाशः स्यात् ॥
क्षुद्भयमामयभयदं निखिलग्रहणं भवेद्यदि वा ॥ १५ ॥
सव्यापसव्यलेहग्रसननिरोधावमर्दनामर्दाः ॥
आघ्रातं मध्यतमस्तमोऽन्त इति ते दश ग्रासाः ॥ १६ ॥

सव्यगते तमसि सति सर्वग्रासः शुभप्रदो जगतः ॥
अपसव्ये तमसि सति त्वपसव्याख्या क्षितीशसंक्षोभः ॥ १७ ॥
परितो जिह्वालीढः स ग्रासो मण्डलस्य लेहनो नाम्ना ॥
प्रीतिदमखिलजनानां सुवृष्टिदं सर्वसस्यानाम् ॥ १८ ॥
अर्द्धादूनं ग्रहणं ग्रसनं विविधामयप्रदं जगतः ॥
स्पर्शविमर्दान्मोक्षविमर्दमधिकं यदा भवति ॥ १९ ॥
स निरोधो विज्ञेयस्त्वनिष्टदः सर्वभूतानाम् ॥
मंडलमधिकं पीत्वा कंचित्कालं विलंब्य स निवृत्तः ॥ २० ॥
स विमर्दो विज्ञेयः स च हानिकरश्च जंतूनाम् ॥
मागधगौडकिरातद्रविडानामामयश्च नियमेन ॥ २१ ॥
आवृत्त्यारोहणवच्चक्राकारेण दृश्यते तमःपटलम् ॥
स च मर्दो विज्ञेयः समस्तराष्ट्रस्य नाशकरः ॥ २२ ॥
मुकुरोपरि निश्वासानीलसदृशं दृश्यते तमश्छत्रम् ॥
आघ्राताह्वयमखिलं शुभप्रदं सर्वजंतूनाम् ॥ २३ ॥
मध्ये तमसाऽविष्टं वितमस्कं सर्वमंडलं परितः ॥
तन्मध्यतमस्पर्शो मध्यमदेशस्य नाशकरः ॥ २४ ॥
पर्यंते भवति तमो न तु मध्ये तमोऽन्तकः सोऽपि ॥
ईतिभयं सस्यानां डामरमधिकं भवेत्तत्र ॥ २५ ॥
क्षेमसुभिक्षं श्वेते राहौ पीडां च विप्रमुख्यानाम् ॥
अनलभयं त्वनिलनिभे पीडा स्याद्वह्निजीविनां सम्यक् ॥ २६ ॥
हरिते त्वामयभीतिः सस्यानामीतिरोगभयम् ॥
कपिले शीघ्रगसत्वैर्भयमत्युग्रं च शबरजातीनाम् ॥ २७ ॥
दिनकररश्मिसमाने दुर्भिक्षं पक्षिसंघपीडा च ॥
धूम्रनिभाः क्षेमकराः सस्यानां मन्दवृष्टिदः सततम् ॥ २८ ॥

---

१ शीघ्रगनर्मासीरति पाठान्तरम् ।

कापोतारुणसदृशः श्यामनिभो वाऽऽमयं च दुर्भिक्षम् ॥
अतिकृष्णं शूद्राणां व्याधिकरं भीतिदं च नरपाणाम् ॥ २९ ॥
मरकतमणिपीतश्चेद्वैश्यध्वंसी सुभिक्षकरः ॥
गैरिकसदृशे युद्धं विद्युत्सदृशे च वह्निभयम् ॥ ३० ॥
दुर्वासमानवर्णे हारिद्रे वायुरुग्भयं जगतः ॥
पाटलकुसुमसमानस्त्वशनाद्भीतिप्रदो राहुः ॥ ३१ ॥
पंकविदूषितरूपः क्षत्रियकुलनाशदस्त्ववृष्टिकरः ॥
बालार्काम्बुजसदृशस्त्वाहवदस्त्विन्द्रचापसदृशश्च ॥ ३२ ॥
ग्रहणसमयेऽतिवृष्टिः पवनोत्पाता भवंति यदा ॥
आतंकमरकभीतिर्विपुला स्यात्क्षुद्भयं चैव ॥ ३३ ॥
आवंतिककावेरीनार्मदतीराश्रिताश्च ये च जनाः ॥
सहकौशलिका विलयं प्रयांति वसुमघात्मजे ग्रस्ते ॥ ३४ ॥
शशितनये ग्रस्ते सति शरयूनेपालसिन्धुतीराश्च ॥
स्त्रीबुधसज्जनशिशवः पीड्यंते विविधरोगैश्च ॥ ३५ ॥
ग्रहणोपगते जीवे बुधमित्रसमुद्रतीरसंभूताः ॥
डामरभूतविकारैर्विलयं यांति प्रकाशिताद्येश्च ॥ ३६ ॥
भृगुतनये राहुगते दशार्णजाः केकयाः समाद्रेयाः ॥
आर्यावर्त्ताः सुखिनः पीड्यंते सलिलनिलयाश्च ॥ ३७ ॥
दिनकरतनये ग्रस्ते सौराष्ट्राः संकराश्च कैवर्त्ताः ॥
बर्बरकुत्सितधान्यं विलयं यांति प्राभृतधनिकाश्च ॥ ३८॥
ऊर्जेऽपि मासे ग्रहणं कृशानोर्भीतिं च सापलजनात्करोति ॥
कांबोजकाश्मीरसुमागधांश्च सशूरसेनान्द्रविडान्निहंति ॥ ३९॥
सुभिक्षकृत्क्षेममतीववृष्टिर्मासे सहे पर्वणि रुक्प्रदः स्यात् ॥
काश्मीरकान् कोशलकान्सपौण्ड्रान्दुनोति राहुः खलु याचकान् ४०॥

[1] वाऽथ रुग्भयमिति पाठान्तरम् ।

पौषे द्विजक्षत्रजनोपतापस्त्वनर्घवृष्टिः क्षितिपालभीतिः ॥
ध्वंसं व्रजंत्यत्र विदेहपौण्ड्रमद्रात्रिगोत्रप्रभवाः सगौडाः ॥ ४१ ॥
गजाश्वसंघान्द्विजदेवभक्तान्धर्मरतांस्तान्पितृमातृभक्तान् ॥
दुनोति राहुर्मनुजांश्च माघे सस्यार्घवृष्टिं प्रचुरां करोति ॥ ४२ ॥
तपस्यमासि द्विजसज्जनानां कांबोजबाह्लीककलिंगजानाम् ॥
हानिप्रदः सस्यसुवृष्टिदश्च दृष्टं तमो भूपविरोधकश्च ॥ ४३ ॥
भूपोपजीवाखिलपण्यजीविहास्यज्ञशिल्पाखिललेखकानाम् ॥
पीडाप्रदो देवपतिश्च राहुर्मासे मधौ पर्वणि मन्दवर्षी ॥ ४४ ॥
कार्पासमुद्राः सतिला विनाशमायांति मूलान्यखिलानि तत्र॥
वैशाखमासे ग्रहणे कलाज्ञाश्चेक्ष्वाकुयौधाश्च तथा सुभिक्षम् ॥ ४५ ॥
नरेंद्रपत्नीद्विजसस्यवृद्धिः सौम्या जनाश्चोरकिरातसंघाः ॥
प्रध्वंसमायांति तथा सुवृष्टिर्ज्येष्ठे च मासे ग्रहणं यदि स्यात् ॥ ४६ ॥
आषाढमासे ग्रहणं तडागवापीनदीदीर्घिकवप्रपूर्णाः ॥
काश्मीरगांधारपुलिंदचीना लयं प्रयान्त्यल्पजनाः सुतुष्टाः ॥ ४७ ॥
काम्बोजकान्मागधशूरसेनान्पुलिंदचीनानथ कौरवांश्च ॥
निहंति देवोऽपि च मंदवर्षी दृष्टो नभोमासि स सैंहिकेयः ॥ ४८ ॥
म्लेच्छान्सुदांध्रांश्च कलिंगवंगान्खशांश्च सौवीरभवान् किरातान् ॥
स्त्रीणां च गर्भं विनिहंति राहुर्नभस्यमासे भुवि भूरिवृष्टिः ॥ ४९ ॥
कांबोजचीनान् यवनान्सशल्यान् त्रिगर्तिकान्दर्दुरमागधांश्च ॥
आनर्तपौंड्रान्भपजश्चराहुर्निहन्ति मासे त्विषसंज्ञिकेऽपि ॥ ५० ॥
हनू च कुक्षी त्वथ पायुभेदः संछर्दनं यज्जरणं ततश्च ॥
मध्ये विदारं च विदारमन्ते मोक्षप्रभेदा दश चंद्रभान्वोः ॥ ५१ ॥
दक्षिणहनुभेदसंज्ञितमाग्नेय्यामपगमनमिन्दोश्च ॥
अपि रुक् सस्यविमर्दनमतिवृष्टिर्नरपतेः क्षोभः ॥ ५२ ॥

१ मद्रांश्च इति पाठांतरम्.

अभिगमनं चैशान्यां वामो हनुभेदसंज्ञितः सोऽपि ॥
शस्त्रभयं रोगभयं करोति वृष्टिं च राजहानिं च ॥ ५३ ॥
दक्षिणपार्श्वविमोक्षो दक्षिणकुक्षिप्रभेदसंज्ञः सः ॥
नृपतिकुलेभ्यः पीडां करोति सापत्न्यजनसंघान् ॥ ५४ ॥
उत्तरमार्गे विचरति राहौ वामस्तु कुक्षिभेदः स्यात् ॥
गर्भविपत्तिः स्त्रीणां मध्यानि च तानि पूर्वसस्यानि ॥ ५५ ॥
दक्षिणपार्श्वाख्यः स च नैर्ऋतकोणाच्च याम्यदिग्गमनम् ॥
बहुविधसस्यामयकृत्त्वपरसस्यस्य नाशकरम् ॥ ५६ ॥
आरभ्याऽनिलककुभश्चोत्तरमार्गस्थितो यदा राहुः ॥
उत्तरपार्श्वाख्यः स च नानामयभूपभीतिदः सततम् ॥ ५७ ॥
प्रग्रहणं चेत्प्राच्यां दिशि कृत्वा प्रागेव सर्पति च ॥
स छर्दनाख्यमोक्षः सुभिक्षदः सर्वजन्तूनाम् ॥ ५८ ॥
प्रागेव प्रग्रहणं कृत्वा त्वपसर्पणं प्रतीच्यां च ॥
जरणाख्यो विज्ञेयः स च जंतुविनाशनं कुरुते ॥ ५९ ॥
आदौ मध्यविकासः पश्चादंते च विदरणं मध्यम् ॥
सततं त्वन्तःकलहं करोति सौभिक्षमतिवर्षम् ॥ ६० ॥
प्रत्यन्ते विमलतरः पश्चान्मध्यं च विदरणं चांतम् ॥
मध्यांतदेशनाशं करोति सस्यस्य वै नाशम् ॥ ६१ ॥
दशविधमोक्षाः कथिता विज्ञेया भास्करग्रहणे ॥
प्रग्रहणं प्रागिन्दोर्मोक्षः पश्चाद्विपर्ययाद्द्युमणेः ॥ ६२ ॥

इति वृद्धवसिष्ठब्रह्मर्षिविरचितायां संहितायां राहुचाराध्यायो नवमः ॥ ९ ॥

---

## अथ केतुचाराध्यायः १० ।

केतोरुदयास्तमयं ज्ञातुं गणितान्न शक्यते यस्मात् ॥
दिव्यांतरिक्षभौमास्तस्मात्त्रिविधाश्च केतवो जगति ॥ १ ॥

दृश्यंते द्वित्रिदिनैः शुभदा मासैश्च रुग्भयदाः॥
जीवसुता विकचाख्याः शुक्लास्ताराश्रिताः स्निग्धाः॥ १४॥
याम्यायां दिशि संस्था बहवस्ते पापदाः सततम्॥
बुधतनयाश्चौराख्याः शुक्लाः सूक्ष्मा यथेष्टदिक्प्रभवाः॥ १५॥
आमयभयदाः सततं जन्तूनां पञ्चपञ्चाशत्॥
कुजतनयाः कौंजेयाः क्षतजानलसन्निभास्त्रिशूलधराः॥ १६॥
याम्यायां दिशि संस्थाः क्षुद्भयदाः षष्टिसंख्याकाः॥
तामसकीलकसंज्ञा राहुसुताः सूर्यमण्डलदृष्टाः॥ १७॥
तेषां तन्निखिलफलं सम्यक्कथितं च सूर्यवारेऽपि॥
अग्निसुतास्त्वाग्नेय्यां विंशत्यधिकाश्च शतसंख्याः॥ १८॥
प्रलयानलसदृशाभा भुवि वह्निभयप्रदास्तेऽपि॥
अरुणाख्याः श्यामनिभाः शुक्रसुता विविधरूपसंकीर्णाः॥ १९॥
शस्त्रक्षुद्भयदास्ते सप्तोत्तरसप्ततिश्च संख्याकाः॥
दण्डकसंज्ञाश्चाष्टौ तारासदृशाः प्रजापतेस्तनयाः॥ २०॥
द्वाचत्वारिंशोत्तरशताधिकाः पापदा विधातृसुताः॥
वरुणभवाः कंकाख्या द्वात्रिंशत् वंशगुल्मयष्टिनिभाः॥ २१॥
शशिवत्प्रभासमेता राजान्यत्वं प्रकुर्वते ते वै॥
कालभवाः षण्णवतिः संख्यास्तेषां कबंधनिभाः॥ २२॥
तन्नामानः शिखिनो दुःखामयभीतिदा जगतः॥
विमलास्ताराकारा दशदिक्षु समुद्भवाः शिखिनः॥ २३॥
एवं सहस्रभेदाः पापाश्चेषां विशेषमभिधास्ये॥
पश्चिमदिशि संभूतश्चोत्तरनम्रश्च सौम्यकेतुः सः॥ २४॥
कुरुते सुभिक्षमतुलं सितवर्णोऽसौ महास्निग्धः॥
दक्षिणनम्रः प्राच्यां तथाविधो याम्यकेतुः सः॥ २५॥

रूक्षः क्षुद्भयदायी मरकभयं वा करोत्येवम् ॥
धूमनिभो याम्यायां कपालकेतुर्बृहत्तनुः स्निग्धः ॥ २६ ॥
दिक्षु विदिक्षु प्रभवः क्षुन्मरकावृष्टिरोगकरः ॥
प्राच्यां दिशि संभूतः प्रदक्षिणं भ्रमति चक्रवद्रूक्षः ॥ २७ ॥
स च चक्रकेतुरनिशं कपालकेतोश्च तुल्यफलः ॥
पश्चिमतः संभूतो याम्यायां दिशं भ्रमति चाप्रदाक्षिण्यम् ॥ २८ ॥
धूमनिभो विषमाख्यः केतुर्भूभारमपनयति ॥
कतिपयदिवसं गत्वा गमननिवृत्तिं करोति धूम्रनिभः ॥ २९ ॥
नरपतिकलहाज्जगतः करोति विलयं स चक्राख्यः ॥
गगनत्रिभागदीर्घः श्यामनिभोऽसौ महासटाकारः ॥ ३० ॥
ऋजुवक्रगतिं कुरुते क्रमशो जगतस्त्रिभागहरः ॥
गतिरहितो ध्रुवकेतुः प्रमाणवर्णाकृतिर्न भवेत् ॥ ३१ ॥
ग्रहनक्षत्रोपगमे नैवाशुभदो भवेत्केतुः ॥
उपकरणेषु च राज्ञां सुरगृहतरुपर्वतेषु सर्वेषु ॥ ३२ ॥
दर्शनमुपैति नियतं विनाशिनामेव नियमेन ॥
कुमुदनिभः कुमुदाख्यो दिवसैः पङ्क्तिस्तु पश्चिमे दृष्टः ॥ ३३ ॥
प्रागुत्तरादिशि यदि वा सुभिक्षमतुलं करोत्येव ॥
तारोपरि मणिकेतुर्याम्यायां दिशि सकृद्दृष्टः ॥ ३४ ॥
उदयास्तमयसमये वा शुभदोऽसौ क्षीरधारेव ॥
जलधारेव हि ऋज्वी नतया शिखया परेण दृष्टः सः ॥ ३५ ॥
जलकेतुर्जलसदृशः सुभिक्षकरस्तु सर्वजंतूनाम् ॥
हरिलांगूलनिभो भवकेतुः कचसन्निभो वापि ॥ ३६ ॥
बहु रोगभयं कुरुते सर्पाकारस्तु तद्भयदः ॥
अपरोऽपि पद्मकेतुः पद्मनिभः पद्मगर्भसंकाशः ॥ ३७ ॥

क्षेमकरो नृपतीनां सुभिक्षदः सर्वजंतूनाम् ॥
आवर्त्तः केतुरयं प्रादक्षिण्येन दीप्तिमाञ्छुक्कः ॥ ३८ ॥
शुभदो व्यत्ययकेतुस्त्वतुलामयभीतिरीतिकरः ॥
आक्रम्य गगनमखिलं संवर्त्ताख्यः स धूमनिभः ॥ ३९ ॥
शूलाग्रस्त्वितरो वा स केतुरसकृद्भयप्रदो जगतः ॥
शुभदाः शुक्लनिभा ये कृष्णास्त्वशुभप्रदा जगतः ॥ ४० ॥
केतूनां फलमुक्त्वा वक्ष्ये दस्रादिभेषु जातानाम् ॥
अश्विन्यां यदि केतुर्जातस्तदाश्वजीविनं हन्यात् ॥ ४१ ॥
याम्ये म्लेच्छाधिपतिं बहुलायां कलिङ्गकाधिपतिम् ॥
रोहिण्यामतुलबलं निहंति केतुश्च शूरसेनेशम् ॥ ४२ ॥
औशीनरमुख्यपतीन्सौम्ये रौद्रे च जलजंतून् ॥
अश्मकदेशाधिपतिं त्वादित्ये पुष्यभे च मगधपतिम् ॥ ४३ ॥
आर्याधिपतिं सार्पे पाण्ड्याधिपतिं च पितृधिष्ण्ये वै ॥
भाग्यर्क्षे तूज्जयिनं चोत्तरभे दण्डनायकान्त्वखिलान् ॥ ४४ ॥
हस्तर्क्षे धनिकवराश्चित्रायां कुटभवान्निखिलान् ॥
कांबोजनृपतिमुख्यं प्रभंजने जातकेतुरपि ॥ ४५ ॥
इक्ष्वाकुवंशनाशं द्विदैवभे मित्रभे च खशगौडेशम् ॥
ज्येष्ठायां यदि जातः स हन्यते सर्वमंडलाधीशम् ॥ ४६ ॥
मूले मद्राधिपतिं कलिङ्गदेशाधिपतिं जलदेवे ॥
गुर्जरिका ये देशास्तान्हन्याद्विश्वधिष्ण्यजः सोऽपि ॥ ४७ ॥
केकयनाथं हन्याच्छ्रवणर्क्षे वसुभवोऽखिलान् द्रविडान् ॥
नैमिपनृपतिं हन्याच्छतभिषजस्त्वजाङ्घ्रिजश्च पाञ्चालान् ॥ ४८ ॥
अहिर्बुध्न्यर्क्षभवः संकरिकान् किरातकोणभवान् ॥
पौष्णर्क्षभवः केतुर्द्विजसज्जनधर्ममार्गस्थान् ॥ ४९ ॥
अभिजिन्नक्षत्रभवः कोंकणदेशं निशिचरांश्चापि ॥

ये केतवश्चाश्विमुखर्क्षजातास्ताराग्रहादिष्वपि संभवाश्च ॥
कुर्वंति ते तीक्ष्णफलं जनानामन्येऽपि सामान्यफलप्रदाः स्युः ॥५० ॥
इति वृद्धवसिष्ठमहर्षिविरचितायां संहितायां केतुचाराध्यायो दशमः ॥ १० ॥

## अथ वर्षेशादिनिर्णयफलाध्यायः ११ ।

ब्राह्मं च दिव्यं मनुपित्र्यमानं सौरं च चांद्रं गुरुसावनर्क्षम् ॥
एषां नवानां च पृथक्पृथग्यत्प्रयोजनं तत्क्रमशः प्रवक्ष्ये ॥ १ ॥
मानं विधातुः खलु नित्यमायुः प्रमाणविज्ञानविधौ च कार्यम् ॥
गीर्वाणमन्वोरपि मानमेवं पैत्र्ये च माने शशिनः प्रवृत्तम् ॥ २ ॥
षष्ट्यब्दजन्मप्रभवादिकानां फलं च सर्वं गुरुमानतः स्यात् ॥
मासे यदा तत्तपसीन्द्रवंद्ये त्वाद्ये लवे वासवतारकायाः ॥ ३ ॥
सौरं च संक्रांतिवशादिनस्य नाक्षत्रमिन्दोर्भगणप्रमाच्च ॥
त्रिंशद्दिनं सावनमानमाद्यं दिनादमान्तं खलु चान्द्रमानम् ॥ ४ ॥
दिनप्रमाणं त्वयनं च सर्वं संक्रांतिकालस्य विनिर्णयं च ॥
कृतादिमानं निखिलग्रहाणां यत्कर्म सौरेण विगृह्यतेऽत्र ॥ ५ ॥
जीमूतगर्भं निखिलं सुसम्यगृक्षेण मानेन निरीक्षितव्यम् ॥
नृगर्भवृद्धिः प्रबलर्तुकालं यत्सूतकाद्यं खलु सावनेन ॥ ६ ॥
उद्वाहयज्ञोपनयप्रतिष्ठातिथिव्रतक्षौरमहोत्सवाद्यम् ॥
पर्वक्रिया वास्तुगृहप्रवेशः सर्वं च चान्द्रेण विगृह्यते तत् ॥ ७ ॥
चैत्रस्य शुक्लाद्यतिथेश्च वारनाथोऽब्दपस्तस्य चमूपतिः सः ॥
मेषस्य संक्रांतितिथेश्च वारनाथस्तु सस्याधिपतिर्भवेत्सः ॥ ८ ॥
कुलीरसंक्रांतिजवारनाथो रसाधिपस्तौलिनिवासरेशः ॥
फलं तथैषां क्रमशश्चतुर्णां पृथक् पृथग्यत्नयतः प्रवक्ष्ये ॥ ९ ॥
वर्षाधिपो मेषदिनस्य वारश्चमूपतिश्चैत्रदिनादिवारः ॥
हूणेषु वंगेषु खशेषु मागधेष्वेवं च पौण्ड्रेष्वपि टंकणेषु ॥ १० ॥

अब्दाधिपे दिनपतौ खलु मध्यवृष्टिर्मंदप्रभर्क्षगणशीतकरं नभश्च ॥
हंतुं सपत्नविषयान्निखिलक्षितीशा नित्यं चरंति भुवि भूरिबलावृताश्च११
गोधूमशालीक्षुमती धरित्री पुष्पैर्विचित्राऽध्वरवेदनादैः ॥
विभांति गावः पयसः प्रभूता दुग्धाब्धिजे वर्षपतौ च सोमे ॥ १२ ॥
चौराग्निसापत्नगणप्रभूता मही महीशाखिलयुद्धकीर्णा ॥
कुजेऽब्दनाथे पिटकामयाद्यैः सदाऽऽकुला वारिसुसस्यपूर्णा ॥ १३ ॥
प्रभूतवायुर्भुवि मध्यवृष्टिर्गदाहवप्रोद्धतराजकोपः ॥
बुधेऽब्दनाथे त्वपरं च सस्यं श्रेष्ठं च वृद्धिर्लिपिलेखकानाम् ॥ १४ ॥
भूदेवसंघोऽध्वरतत्परश्च भूपाः प्रजापालनशीलयुक्ताः ॥
दोषा लयं यान्ति गुरोस्तु वर्षे स्वकर्मसक्ता निखिलाः प्रजाः स्युः ॥ १५ ॥
नानाविधोद्यानतडागवप्रपरेक्षुवाटाखिलसस्यपूर्णा ॥
मही महीदेवमहीभुजाद्यैर्जनैर्विचित्रा भृगुजेऽब्दनाथे ॥ १६ ॥
मध्यानि सस्यानि विचित्रवृष्टिश्चौरामयप्रोद्धतराजकोपः ॥
यदुत्तरं सस्यभयं कुधान्यं संपूर्णमस्मिन्नविजेऽब्दनाथे ॥ १७ ॥

इति राजफलम् ।

दिनकृति मंत्रिणि सततं विचित्रवर्णानि सर्वसस्यानि ॥
क्षितिपतिकोपं विपुलं विपिनारामाश्च सीदन्ति ॥ १८ ॥
तुहिनकरे सचिववरे नानाविधसस्यसंपूर्णा ॥
द्विजसज्जनपशुवृद्धिः काननफलपुष्पतोयजंतूनाम् ॥ १९ ॥
दहनप्रहरणडमरमरुदामयभीतिरतुला स्यात् ॥
क्षितितनये मंत्रिणि सति शोषं समुपैति निम्नसस्यंचयम् ॥ २० ॥
मंत्रिणि शशांकतनये प्रभूतवायुर्निरंतरं वाति ॥
मध्यमफलदा धरणी विभाति सुरसद्दशलोकैश्च ॥ २१ ॥
सुरसचिवे मंत्रिणि सति सुवृष्टिबहुसस्यसंपूर्णम् ॥

१ सस्यमयमिति पाठः ।

जगदखिलं जलपूर्णं प्रोद्धतराजाहवो ज्ञेयः ॥ २२ ॥
उच्चलिताऽध्वनिरनिशं विप्राणामध्वरे चरत्यखिलम् ॥
अनिमिषहृदयानंदं कुर्वन् सचिवे सुरारिगुरौ ॥ २३ ॥
मंदफला निखिलधरा न वारि मुंचति वारिधराः ॥
दिनकरतनये सचिवे प्रभया रहितं वियत्सततम् ॥ २४ ॥

इति मंत्रिफलम् ।

सस्यार्धशे भास्वति भूमौ विरलानि सर्वसस्यानि ॥
अतिविपुलं त्वीतिभयं कुलित्थचणकादिसंपूर्णम् ॥ २५ ॥
सस्यपतौ तुहिनकरे रमणीया सुविस्तृता धरणी ॥
फलपुष्पसस्यवारिभिरमिताविकगोभिरन्नाद्यैः ॥ २६ ॥
सीदंति सस्यनिचया भुवि भौमे सस्यपे महोष्णभयात् ॥
अपराखिलधान्यचयं क्वचित्कचिद्भवति शस्त्रभयम् ॥ २७ ॥
अनिलहतं सस्यचयं त्वतिमध्यमवृष्टिसम्पन्नम् ॥
शशितनये सस्यपतौ त्वपरं धान्यं प्रभूतफलम् ॥ २८ ॥
सस्यपतौ त्रिदशगुरौ बहुविधसस्यार्घसंपूर्णम् ॥
टंकणमागधदेशे मध्यमसस्यार्घवृष्टिः स्यात् ॥ २९ ॥
दैत्येज्ये सस्यपतौ बहुविधफलपुष्पसंपूर्णम् ॥
अमरविडंबितजनता संपूर्णमाभाति निखिलजगत् ॥ ३० ॥
मध्यमसस्यक्षितितलमिनतनये सस्यपे च राजभयम् ॥
कोद्रवकुलित्थचणकैर्माषैर्मुद्गैश्च विपुलतरम् ॥ ३१ ॥

इति धान्याधिपफलम् ।

चंदनकुंकुमगुग्गुलतिलतैलैरण्डतैलमुख्यानि ॥
प्रचुराणि रसान्यतुलं रसनाथे भास्करे सततम् ॥ ३२ ॥
इक्षुविकारं त्वखिलं क्षीरविकारं च सर्वतैलानि ॥
गन्धयुतानि च सर्वाण्यपि सुलभान्येव रसपतौ चंद्रे ॥ ३३ ॥

भुवि रसनिचयाः सर्वे चंदनकर्पूरकुंकुमाद्यं च ॥
दुर्लभमवनीसूनौ रसाधिपे मधुरवस्तूनि ॥ ३४ ॥
शशितनये रसनाथे पिप्पलिशुण्ठी च हिंगुलशुनानि ॥
घृततैलाद्यं निखिलं दुर्लभमिक्षूद्भवं सकलम् ॥ ३५ ॥
रसनाथे देवगुरौ चंदनकर्पूरकन्दमूलानि ॥
सुलभानि रसान्यखिलान्यतुलं सीदंति कुंकुमाद्यानि ॥ ३६ ॥
सुगन्धवस्तूनि सिते रसेशे निर्गंधवस्तूनि रसादिकानि ॥
क्षाराणि सर्वाणि च कंदमूलफलानि पुष्पाणि बहूनि तानि ॥ ३७ ॥
रसेश्वरे सूर्यसुते धरित्र्यां सुदुर्लभान्येव रसानि यानि ॥
सुगंधवस्तूनि घृतेक्षुकंदमूलानि चान्यत्सुलभं भुवि स्यात् ॥ ३८ ॥

इति रसेशफलम् ।

अथ क्षेपाः ।

त्रिघ्ने शकाब्दे मुनिभिर्विभक्ते द्विनिघ्नशेषं शरयुक्तु वृष्टिः ॥
धान्यं तृणं शीतमथोष्णवायू प्रजासमृद्धिः क्षयराजविग्रहौ ॥ ३९ ॥
उग्रं च पुण्यं परतश्च पापं क्रमेण लब्धाच्छकवत्सराच्च ।
निरीक्ष्य सम्यक् प्रतिवर्षमेवं सर्वं वदेज्ज्यौतिषिकः पुनश्च ॥
स्वस्वामिवर्षाधिपवत्सरैक्यं त्रिघ्नं शराढ्यं तिथिभक्तशेषम् ।
आयोऽथ लब्धिस्त्रिगुणा शराढ्या तिथ्युद्धृता शेषमितो व्ययःस्यात् ४०
शाकं च वेदगुणितं सप्तभिर्भागमाहरेत् ॥
शेषं च द्विगुणीकृत्य रूपं चैव तु मिश्रयेत् ॥ ४१ ॥
क्षुधा तृषा च निद्रा च आलस्यं तूद्यमस्तथा ॥
शांतिः क्रोधस्तथा लोभो भेदो मैत्री तथैव च ॥ ४२ ॥
उत्साहपुण्यपापानि ज्ञातव्यानि यथाक्रमम् ॥
त्रिघ्नः शाकः सप्तभक्तो लब्धं राम२हृतं भवेत् ॥ ४३ ॥

शेषं तु द्विगुणीकृत्य शरेणैव तु मिश्रयेत् ॥
वृष्टिरन्नं तृणं शीतं तेजो वायुश्च संज्ञकाः ॥ ४४ ॥
विग्रहः सर्वलोकानां ज्ञायते च पुनः पुनः ॥
शाको वेदमितैर्निघ्नः शैलैर्लब्धयुगाहतैः ॥ ४५ ॥
यच्छेषं तत्पुनर्द्विघ्नं सैकं प्राग्वत्प्रजायते ॥
क्षुधा तृषा तथा निद्राऽऽलस्योद्यमविषं तमः ॥ ४६ ॥
क्रोधो दंडश्च भेदः स्यादिच्छाग्निश्च रसाः क्रमात् ॥
शाकं पञ्चगुणं कृत्वा शैलैर्लब्धं शराहतम् ॥ ४७ ॥
यच्छेषं तत्पुनर्द्विघ्नं पंचयुग्जायते फलम् ॥
शेषं सौख्यं भयं क्लेशो युद्धं वातोत्सवाः क्रमात् ॥ ४८ ॥
शकादग्निहतान्नंदहृताच्छेषं द्विनिघ्नितम् ॥
त्रिभिर्युतं पुनर्लब्धा सप्तधैवं प्रजायते ॥ ४९ ॥
शलभा मूषकाश्चैव दैविकं हिममेव च ॥
ताम्रं स्वचक्रं च तथा परचक्रमिति क्रमात् ॥ ५० ॥

इदं तु प्रकारान्तरेण कथितम् ।

इति ब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां वर्षेशादिनिर्णय-
फलाध्याय एकादशः ॥ ११ ॥

---

## अथ तिथिस्वरूपाध्यायः १२ ।

दिनाधिपा धातृविधातृविष्णुयमेंदुपद्मकशचीश्वराश्च ॥
वस्वाख्यनागौ परतश्च धर्मशिवार्ककामाः कलिविश्वसंज्ञौ ॥ १ ॥
सदैव नष्टेन्दुतिथीश्वराः स्युर्नूनं च एते पितरः क्रमेण ॥
धनाधिपं केचिदुशंति सन्तस्त्वधीश्वरं वै हरिकामतिथ्योः ॥ २ ॥
वह्निर्विधाताऽद्रिसुता गणेशः सर्पः कुमारो दिनपो महेशः ॥
दुर्गा यमो विश्वहरी च कामः शिवो निशीशश्च पुराणदृष्टः ॥ ३ ॥

नंदा च भद्रा च जया च रिक्ता पूर्णेति सर्वास्तिथयः क्रमात्स्युः ॥
शुक्लेऽधमामध्यमकोत्तमास्ताः पक्षेऽसितेऽप्युत्तममध्यहीनाः ॥ ४ ॥
नोद्वाहयात्रोपनयप्रतिष्ठासीमंतचौलाखिलवास्तुकर्म्म ॥
गृहप्रवेशाखिलमङ्गलाद्यं कार्यं हि मासादितिथौ कदाचित् ॥ ५ ॥
सप्तांगचिह्नानि नृपस्य वास्तुव्रतप्रतिष्ठाखिलमंगलानि ॥
यात्राविवाहाखिलभूषणं यत्कार्यं द्वितीयादितिथौ सदैव ॥ ६ ॥
संगीतविद्याखिलशिल्पकर्म सीमंतचौलान्नगृहप्रवेशम् ॥
कार्यं द्वितीये दिवसे यदुक्तं सदा तृतीये दिवसेऽपि कार्यम् ॥ ७ ॥
रिक्तासु शत्रोर्वधबंधशस्त्रविषाग्निघातादि च याति सिद्धिम् ॥
सन्मंगलं तासु कृतं च मूढैर्विनाशमायाति तदा तु नूनम् ॥ ८ ॥
शुभानि कार्याणि चरस्थिराणि चोक्तान्यनुक्तान्यपि यानि तानि ॥
सिद्धिं प्रयान्त्याशु ऋणप्रदानं विना सदा नागतिथौ प्रभूतम् ॥ ९ ॥
अभ्यंगयात्रापितृकर्मदन्तकाष्ठं विना पौष्टिकमंगलानि ॥
षष्ठ्यां विधेयानि रणोपयोग्यशिल्पानि वास्त्वम्बरभूषणानि ॥ १० ॥
द्वितीयायां तृतीयायां पंचम्यां कथितान्यपि ॥
तानि सिद्ध्यंति कार्याणि सप्तम्यामखिलान्यपि ॥ ११ ॥
संग्रामयोग्याखिलवास्तुशिल्पनृत्यप्रभेदाखिललेखनानि ॥
स्त्रीरत्नचर्याखिलभूषणानि कार्याणि कर्माणि महेशतिथ्याम् ॥ १२ ॥
द्वितीयायां तृतीयायां पंचम्यां सप्तमीतिथौ ॥
उक्तानि यानि सिद्ध्यन्ति दशम्यां तानि सर्वदा ॥ १३ ॥
व्रतोपवासाखिलधर्मकार्यसुरोत्सवाद्याखिलवास्तुकर्म्म ॥
संग्रामयोग्याखिलवास्तुकर्म विश्वे तिथौ सिद्ध्यति शिल्पकर्म ॥ १४ ॥
पृथिव्यां यानि कार्याणि कर्मपुष्टिशुभानि च ॥
चरस्थिराणि द्वादश्यां यात्रान्नग्रहणं विना ॥ १५ ॥
विधातृगौरीभुजगभान्वंतकादिनेषु च ॥

उक्तानि तानि सिद्ध्यन्ति त्रयोदश्यां विशेषतः ॥ १६ ॥
यज्ञक्रिया पौष्टिकमंगलानि संग्रामयोग्याखिलवास्तुकर्म ॥
उद्वाहशिल्पाखिलभूषणाद्यं कार्यं प्रतिष्ठा खलु पौर्णमास्याम् ॥ १७ ॥
सदैव दर्शे पितृकर्म चैव नान्यद्विधेयं शुभपौष्टिकाद्यम् ॥
मूढैः कृतं तत्र शुभोत्सवाद्यं विनाशमायात्यचिराद्ध्रुवं तत् ॥ १८ ॥
चतुर्दश्यष्टमी कृष्णा त्वमावास्या च पूर्णिमा ॥
पुण्यानि पंच पर्वाणि संक्रांतिर्दिनपस्य च ॥ १९ ॥
पंचपर्वसु नंदासु न कुर्याद्दन्तधावनम् ॥
तत्र कुर्यादनादृत्य स नरो विधिहन्तकः ॥ २० ॥
स्त्रीसेवनं पर्वसु पक्षमध्ये मांसं हि षष्ठीसु च तैलवर्ज्यम् ॥
नृणां विनाशाय चतुर्दशीषु क्षुरक्रिया स्यादसकृत्तदाऽशु ॥ २१ ॥
कलि१४वसु८गणपति४षण्मुख६हरि१२दुर्गा ९ तिथिषु पक्षरन्ध्रासु ॥
शर५मनु१४वसु८गोदशभिस्तत्त्वविहीनांत्यनाडिकाः शुभदाः ॥२२॥
नवमी त्रिविधा ज्ञेया प्रवेशनवमी प्रयाणनवमी च ॥
नवमदिनं निर्गमतः प्रवेशनवमीति विख्याता ॥ २३ ॥
नवमदिनं प्रवेशाद्यत्प्रयाणनवमी च नवमदिनम् ॥
सततं नवमीत्रितयं यात्रायां प्राणहानिदं यातुः ॥ २४ ॥
एकान्तरा हि तिथयो दिवसाद्द्वितीया- ।
चापान्त्ययोर्वृषभकुम्भभयोश्च तद्वत् ॥
कर्कोऽजयोर्मिथुनकन्यकयोश्च कीट- ।
हर्योस्तुलामकरयोः खलु मासदग्धा ॥ २५ ॥
मासदग्धासु तिथिषु कृतं यन्मंगलादिकम् ॥
तत्सर्वं नाशमायाति ग्रीष्मे कुसरितो यथा ॥ २६ ॥
पुण्यं लोकमभिप्रेप्सुरष्टम्यादिषु वर्जयेत् ॥
शीर्षाकपालांत्राणि नखचर्मतिलानि च ॥ २७ ॥

कामदुर्गांतकाविधिनष्टेन्द्वर्कदिनेषु च ॥
सकृदामलकस्नानं सम्पत्पुत्रविनाशनम् ॥ २८ ॥
पंचपर्वसु पाते च ग्रहणे चन्द्रसूर्ययोः ॥
नरश्चाण्डालयोनिः स्यात्तैलस्त्रीमांससेवनात् ॥ २९ ॥
दिवा चंद्रवती राका पूर्णिमानुमती निशि ॥
सा पूर्णिमात्यनुमती तथाऽपि द्विविधा भवेत् ॥ ३० ॥
सिनीवाली दृष्टचन्द्रा नष्टचंद्रा कुहूस्तथा ॥
तिथीनां निर्णयार्थं हि एतत्सर्वमुदीरितम् ॥ ३१ ॥
इषे च शुक्ला नवमी कार्तिके द्वादशी तथा ॥
मासद्वये तृतीया स्याच्चैत्रे भाद्रपदेऽपि च ॥ ३२ ॥
अमावास्या श्रावणे च पौषस्यैकादशी सिता ॥
आषाढे शुक्लनवमी माघमासे तु सप्तमी ॥ ३३ ॥
कृष्णाष्टमी नभस्ये च आषाढी कार्तिकी तथा ॥
फाल्गुने चैत्रमासे च ज्येष्ठमासे च पूर्णिमा ॥ ३४ ॥
मन्वंतरादितिथयः पुण्याः स्युः पितृकर्मसु ॥
तासु जप्तं हुतं दत्तं फलं भवति चाक्षयम् ॥ ३५ ॥

इति मन्वादयः।

कृष्णा पंचदशी माघे नभस्ये च त्रयोदशी ॥
शुक्ले तृतीया वैशाखे नवम्यूर्जे युगादयः ॥ ३६ ॥
यदा कृष्णत्रयोदश्यां पैतृभेन्दुः करे रविः ॥
गजच्छाया तदा ज्ञेया पितॄणां भूरि पुण्यदा ॥ ३७ ॥
स्युस्तिस्रस्तिथयो वारेऽप्येकस्मिन्सावमा तिथिः ॥
तिथिर्वारत्रयेऽप्येका त्रिद्युस्पृक् द्वेऽतिनिन्दिते ॥ ३८॥
कृतं यन्मङ्गलं तत्र त्रिद्युस्पृगवमे दिने ॥
भस्मीभवति तत्क्षिप्रमग्नौ सम्यग्यथेन्धनम् ॥ ३९॥

उपेत्यस्तमवाप्यार्कमुहूर्त्तत्रयवाहिनी ॥
या तिथिः स्यादखंडाख्या न्यूना चेत्खण्डसंज्ञिता ॥ ४० ॥
मासि मार्गशिरस्येव व्रतानां समुपक्रमम् ॥
अखंडायां तिथौ कुर्यादनस्ते गुरुशुक्रयोः ॥ ४१ ॥
सप्तम्यां माघशुक्लायामादित्यं पद्मकैः सुधीः ॥
गव्येन पयसान्नेन मृणालैः सम्यगर्चयेत् ॥ ४२ ॥
प्रतिवर्षं भक्तियुक्त्या यावज्जीवं च यो नरः ॥
अरोगी श्रियमाप्नोति रोगी रोगात्प्रमुच्यते ॥ ४३ ॥
पूजाकर्मणि सा ग्राह्या मध्याह्नव्यापिनी तिथिः ॥
उपवासे व्रते ज्ञेया मुहूर्त्तत्रयवाहिनी ॥ ४४ ॥
नक्तव्रतेषु सर्वत्र प्रदोषव्यापिनी स्मृता ॥
ह्रासवृद्धिसमत्वं च चिन्तयित्वा विनिर्णयम् ॥ ४५ ॥
माघे कृष्णचतुर्दश्यामुपोषित्वा शिवं व्रजेत् ॥
यः कुर्याज्जागरं भक्त्या तस्य नास्ति पुनर्भवः ॥ ४६ ॥
यत्रार्द्धरात्रसंयुक्ता भवेदुग्रा चतुर्दशी ॥
शिवरात्रिव्रतं तत्र नृत्यगीतादिनाऽर्चयेत् ॥ ४७ ॥
फाल्गुनाद्यत्रयोदश्यां कामं दग्ध्वा शिवं व्रजेत् ॥
त्रिदिनं भस्मना तेन तेजस्वी श्रियमाप्नुयात् ॥ ४८ ॥
चैत्रशुक्लचतुर्दश्यां दमनेनार्चयेच्छिवम् ॥
अब्दपूजाफलं प्राप्य स नरो धनिको भवेत् ॥ ४९ ॥
वैशाखे च तृतीयायां योऽर्चयेच्च सुरान् पितॄन् ॥
नाश्नुते मनसा दुःखं स नरः स्वर्गलोकभाक् ॥ ५० ॥
वैशाख्यां विप्रमुख्येभ्यो धर्मप्रीत्या प्रयच्छति ॥
पादुकोपानहौ छत्रं दध्यन्नं करपात्रकम् ॥ ५१ ॥
व्यजनं गन्धपुष्पान्नप्रदानं सर्वजन्तुषु ॥

श्रीमान् भोगी च तेजस्वी विमानच्छत्रचामरः ॥ ५२ ॥
नृत्यगीतादिसंयुक्तः सर्वाभरणभूषितः ॥
दिव्यांगनासमाकीर्णः स नरः स्वर्गमश्नुते ॥ ५३ ॥
शुचिशुक्ले च पञ्चम्यां यजेत्स्कन्धमुपोषितः ॥
पिष्टान्नप्राशनं कृत्वा व्रणरोगात्प्रमुच्यते ॥ ५४ ॥
पूर्वविद्धा तु कर्तव्या पिष्टान्नप्राशने व्रते ॥
पिष्टान्नप्राशनं नृणां रात्रावेव विधीयते ॥ ५५ ॥
शुचिमासे चतुर्दश्यां पवित्रेणार्चयेच्छिवम् ॥
अब्दपूजाफलं लब्ध्वा स नरो धनवान्भवेत् ॥ ५६ ॥
श्रावणस्यासिताष्टम्यां रोहिणी निशि संयुता ॥
यदा भवेत्तदा साक्षाद्देवो जातो जनार्दनः ॥ ५७ ॥
तस्य वै जन्मचिह्नानि यः कुर्यात्ससुपोषितः ॥
जागरं जातकर्माद्यं स वैष्णवपदं व्रजेत् ॥ ५८ ॥
मासि भाद्रपदे शुक्ले चतुर्थ्यां गणनायकम् ॥
अर्चयेन्मोदकाद्यैश्च सर्वविघ्नोपशान्तये ॥ ५९ ॥
मासि भाद्रपदे यस्मिन् दिवसे सुरराजभम् ॥
मध्याह्नादधिकं तत्र ज्येष्ठायाः परिपूजनम् ॥ ६० ॥
नवम्यामश्वयुक्छुक्ले लक्ष्मीं देवीं समर्चयेत् ॥
सरस्वतीमायुधानि युद्धे जयमवाप्नुयात् ॥ ६१ ॥
विजयादशमी तत्र सर्वकार्येष्वनिन्दिता ॥
यात्रायां जयदा राज्ञां सम्यक्सम्पत्प्रयच्छति ॥ ६२ ॥
ऊर्जे शुक्लचतुर्थ्यां यो भुजगान्भक्तितो भजेत् ॥
क्षीरपिष्टगुडाद्यैश्च न तेभ्यो भयमश्नुते ॥ ६३ ॥
आरभ्यैकादशीं तत्र यावच्च दिनपञ्चकम् ॥
तद्भीष्मपञ्चकं ज्ञेयं नृणामघविनाशनम् ॥ ६४ ॥

वत्सरं तप्यते पुण्यं तपसः कार्तिके लभेत् ॥
कार्तिके तपसः पुण्यं लभते भीष्मपञ्चके ॥ ६५ ॥
कार्तिक्यां कृत्तिकायोगे गरुडध्वजदर्शनात् ॥
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ ६६ ॥
उत्सृजेद्वृषभं तत्र उपोषित्वा यथाविधि ॥
कुमारं वा यजेत्तत्र सर्वपापैः प्रमुच्यते ॥ ६७ ॥
शुद्धा त्रेधा तथा विद्धा भिन्ना न्यूना समाधिका ॥
त्रिविद्धैका पुनर्भिन्ना द्वादश्यूनसमाधिकैः ॥ ६८ ॥
आद्यासु षट्सु पूर्वैव व्यवस्थानान्तरद्वये ॥
गृहमेधियतीनां च नवम्यां तु परेऽहनि ॥ ६९ ॥
विद्धात्रयेऽपि पूर्वैव व्यवस्थाऽनन्तरद्वये ॥
अपरेरनिशेषाः स्युः सप्तम्यां तु व्यवस्थितिः ॥ ७० ॥
यामत्रयाधिका यत्र वृद्धिगामी त्वमा यदि ॥
पितृकर्मणि सा ग्राह्या तिथिः पूर्वा क्षयात्मिका ॥ ७१ ॥
अपराह्णे सुसम्पूर्णा सायंस्पृक् स्याद्यदा तिथिः ॥
सैव प्रत्याब्दिकी ग्राह्या नापरा पुत्रहानिदा ॥ ७२ ॥
क्षये पूर्वतिथौ शोध्यं योज्यं वृद्धौ तिथिर्भवेत् ॥
तिथ्यन्तरदलं श्राद्धे स्वाध्यायेऽथ व्रतेऽपि तत् ॥ ७३ ॥
तिथेः पञ्चदशो भागः पक्षयोः स्यात्क्षणा तिथिः ॥
यत्कर्मोक्तं तिथौ यस्यामस्यामप्यखिलं भवेत् ॥ ७४ ॥
यो जानाति हि पञ्चाङ्गं स्फुटं लोके स दैववित् ॥
कालरूपेश्वरं ब्राजन्मूर्तीनामृतमुद्भवम् ॥ ७५ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविर० संहितायां तिथिलक्षणाध्यायो द्वादशः ॥ १२ ॥

# अथ वारस्वरूपाध्यायः १३ ।

राजाभिषेकोत्सवमङ्गलाश्च सेवाहवस्त्वौषधचित्रकर्म ॥
धातुक्रियाभूषणलाक्षचर्मधान्योर्णकोशादि रवौ विदध्यात् ॥ १ ॥
मुक्ताम्बुशङ्खस्फटिकेक्षुरौप्यक्षीरौषधोद्यानकृषिक्रियाद्यम् ॥
स्त्रीनृत्यगीताखिलवास्तुकर्म शशाङ्कवारे रविवासरोक्तम् ॥ २ ॥
विषाग्निशस्त्राहवभेददम्भस्तेयानृतोग्रावधबन्धकर्म ॥
छेदप्रवालाखिलधातुकर्म सदाभिचारं च कुजेऽह्नि कुर्यात् ॥ ३ ॥
नैपुण्यवाहावहशिल्पसन्धिव्यायामपण्याखिललेखनाद्यम् ॥
धातुक्रियाविद्रुमभूषणाद्यं बुधेऽह्नि कार्यं गणितप्रपञ्चम् ॥ ४ ॥
यज्ञक्रियामङ्गलपुष्टिविद्याहेमाम्बरोद्यानविभूषणाद्यम् ॥
भैषज्यशास्त्राहवनृत्यगीतचरास्थिराद्यं सुरपूज्यवारे ॥ ५ ॥
स्त्रीगीतमुक्ताफलवस्त्ररौप्यसुगंधशय्याभरणाम्बराद्यम् ॥
उद्यानकृष्यंबुलतास्त्रपण्यमांगल्यपुष्पादिसितेऽह्नि कुर्यात् ॥ ६ ॥
समस्तवस्तुग्रहणाश्मसीसदीक्षात्रपुस्थैर्यगृहादि कर्म ॥
खरोष्ट्रगोहेमतुलायदासपापानृताद्यं रविपुत्रवारे ॥ ७ ॥
सूर्यः स्थिरः शीतकरश्चरात्मा धराज उग्रः शशिजो विमिश्रः ॥
देवेन्द्रपूज्यो लघुरिन्द्रशत्रुः पूज्यो मृदुस्तीक्ष्णतनुश्च सौरिः ॥ ८ ॥
अभ्यंगो रविवासरे तनुभृतां दुःखप्रदः कांतिदः ।
सोमाह्वे कुजवासरे निधनदः श्रीकीर्तिदश्चन्द्रजे ॥
जीवे शत्रुविवृद्धिदः सितदिने रोगप्रदः सूर्यजे ।
भोगारोग्यविवृद्धिदश्च नियतं श्रीकीर्तिलक्ष्मीप्रदः ॥ ९ ॥
अनुक्तवारतिथिषु त्वमायां विष्टिपातयोः ॥
औषधेन युतं तैलं न दुष्यं ग्रहणं विना ॥ १० ॥
प्रभाकरस्योदयनात्पुरे स्याद्वारप्रवृत्तिर्दशकंधरस्य ॥
चरार्द्धदेशांतरनाडिकाभिरूर्द्ध तथाधोऽप्यपरत्र तस्मात् ॥ ११ ॥

वारप्रवृत्ते घटिका दिनेशात्कालाख्यहोरापतयः क्रमेण ॥
सार्द्धेन नाडीद्वितयेन षष्ठः षष्ठश्च षष्ठश्च पुनः पुनश्च ॥ १२ ॥
वारप्रवृत्तिविज्ञानं क्षणवारार्थमेव तत् ॥
अखिलेष्वन्यकार्येषु दिनादिरुदयो रवेः ॥ १३ ॥
यस्य ग्रहस्यैव च वासरे यत्कर्म प्रदिष्टं विपुलं च कार्यम् ॥
तत्कालहोरासु च तस्य नूनं दिक्छूलपूर्वादि विचिन्तनीयम् ॥ १४ ॥
बलप्रदस्य ग्रहवासरे यच्चोदिष्टकार्यं समुपैति सिद्धिम् ॥
सुदुर्बलस्य ग्रहवासरे तत्प्रयत्नपूर्वं त्वपि नैव साध्यम् ॥ १५ ॥
पूर्णेन्दुशुक्रज्ञसुरेज्यवाराः सर्वेषु कार्येषु सुपूजिताः स्युः ॥
ये सूरसूर्यात्मजभौमवाराः प्रोक्तेषु कार्येष्वपि शोभनाः स्युः ॥ १६ ॥
रक्तो रविर्गौरनिभः शशांकः कुजोऽतिरक्तः शशिजश्च पीतः ॥
सुवर्णवर्णो गुरुरास्फुजिच्च रौप्योपमः कृष्णतनुश्च सौरिः ॥ १७ ॥
जीर्णं जलार्द्रं दहनप्रदग्धं लक्ष्मीकरं लाभकरं प्रियाप्तिम् ॥
मलप्रदिग्धं घृतमंबरं यत्करोति सूर्यादिखगः स्ववारे ॥ १८ ॥
आदित्यभौमार्किदिनेषु धीमान्न दंतकाष्ठं क्षुरकर्म कार्यम् ॥
कुर्वन्नवाप्नोति फलं समग्रं शस्त्रेण सम्यक् स्वशरीरघातम् ॥ १९ ॥
सूर्यारयोर्वासरवर्गकालहोरासु यन्निर्मितमन्दिरं तत् ॥
अपि प्रविष्टं गृहमग्निना तद्राक् दह्यते पावकतारकासु ॥ २० ॥
इति ब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां वारस्वरूपाध्यायस्त्रयोदशः ॥ १३ ॥

---

## अथ नक्षत्रस्वरूपाध्यायः १४ ।

नासत्यान्तकवह्निधातृनिशिपा रुद्रोऽदितिश्चांगिरा ।
वाताशाः पितरो भगोऽर्यमरवी त्वष्टा समीरः क्रमात् ॥
इंद्राग्नीत्युडुपाश्च मित्रसुरपो कोणेश्वरः शंवरं ।
विश्वे [illegible] ॥ १ ॥

यात्राभेपजभूपणविद्याश्वेभाजाशिल्पवस्त्राद्यम् ॥
उत्सवमंगलकार्यं कर्त्तव्यं दस्रनक्षत्रे ॥ २ ॥
साहसदारुणशत्रुप्रशमननिक्षेपकूपकुप्याद्यम् ॥
विपवधवन्धनदहनप्रहरणकार्याणि भरणीषु ॥ ३ ॥
अग्निपरिग्रहसाहसरिपुवधदहनास्त्रशस्त्रकर्माद्यम् ॥
धातुर्वादविधानं विवादलोहाश्म बहुलायाम् ॥ ४ ॥
सुरनरसद्माद्यखिलं विवाहधनधान्यसंग्रहोपनयम् ॥
उत्सवभूपणमंगलमजभे कार्यं सपौष्टिकं कर्म ॥ ५ ॥
शांतिकपौष्टिकशिल्पव्रतकर्मोद्वाहकर्ममंगलाद्यखिलम् ॥
सुरसंस्थापनवास्तुक्षेत्रारंभादि सिद्ध्यते सौम्ये ॥ ६ ॥
प्रहरणदारुणबंधनविग्रहविपसन्धिवह्निकर्माद्यम् ॥
छेदनदहनोच्चाटनमारणकृत्यं च रौद्रभे कुर्यात् ॥७॥
शांतिकपौष्टिकयात्राव्रतप्रतिष्ठानृपाहवाद्यखिलम् ॥
भूपणवास्तुविधानं वाहनकृपिकर्म सप्तमे धिष्ण्ये ॥ ८ ॥
स्थिरचरशांतिकपौष्टिकभूपणशिल्पव्रतोत्सवाद्यखिलम् ॥
वनिताकरसंग्रहणं त्यक्त्वान्यत्कर्म सिद्ध्यते पुष्ये ॥ ९ ॥
उद्धतरिपुमदभञ्जनसाहसवाणिज्यकपटकर्म ॥
अनलायससङ्ग्रहणक्ष्वेडस्तेयादि सर्पभे कार्यम् ॥ १० ॥
युवतीकरसंग्रहणं वापीकूपतडागोत्सवाद्यं च ॥
क्षितिपत्याहवसर्वं पितृधिष्ण्ये च पैतृकं कार्यम् ॥ ११ ॥
शिल्पप्रहरणबंधनदारुणचित्रकापटं कर्म ॥
नटनद्रुमासवाद्यं भाग्ये कुञ्जप्रहरणं च ॥ १२ ॥
उपनयनं करपीडनमखिलं स्थिरशिल्पभूपणं त्वखिलम् ॥
पुरसदनप्रारंभणमंबरकार्यमर्यमर्क्षेषु ॥ १३ ॥
भेपजयात्राविद्याविवाहशिल्पव्रतांबराभरणम् ॥

सुरसंस्थापनमखिलं वास्तुप्रारंभमर्कनक्षत्रे ॥ १४ ॥
शांतिकपौष्टिकमखिलं स्थिरकार्यवस्त्रभूषणं शिल्पम् ॥
उपनयनं वास्तुकृषिक्षितिपतिकार्यं च चित्रायाम् ॥ १५ ॥
सुरनरसद्मविधानं भूषणवैवाहमंगलाद्यखिलम् ॥
बीजारोपणशस्त्रक्षितिपतिसमरं विभूषणं स्वातौ ॥ १६ ॥
उपचयवस्तुग्रहणं भूषणनववस्त्रचित्रकार्यं च ॥
भेषजशकटप्रहरणशिल्पविचित्रं द्विदैवभे कार्यम् ॥ १७ ॥
करमर्दनमुपनयनं यात्रासुरसद्मसंनिवेशाद्यम् ॥
स्थिरचरकार्यं त्वखिलं भूषणमश्वेभकर्म मित्रर्क्षे ॥ १८ ॥
रिपुवधभेदनदहनप्रहरणवह्निलोहकार्याद्यम् ॥
स्तेयविधानं विविधं शिल्पं चित्रं सुरेशभे कार्यम् ॥ १९ ॥
कृषिभवनविपिनकार्यं वापीकूपादिबीजनिर्वापम् ॥
समरविभूषणशिल्पं विग्रहसंधिश्च मूलनक्षत्रे ॥ २० ॥
शंबरबंधनमोक्षणवापीकूपादिनिग्रहं हननम् ॥
द्रुमखंडनवनचारिणपक्षिणां च यत्कार्यमंबुभे कार्यम् ॥ २१ ॥
स्थापनमुंडनमण्डनवास्तुनिवेशं प्रवेशनाद्यं च ॥
बीजारोपणवाहनभूषणवस्त्रं च वैश्वभे कार्यम् ॥ २२ ॥
शांतिकपौष्टिकमंगलविचित्रकृषिशिल्पमंबराद्यं च ॥
धामविधानस्थापनमुपनयनं विष्णुभे कार्यम् ॥ २३ ॥
उपनयनं चौलविधिं जलतुरगोष्ट्रेभदेवनिर्माणम् ॥
कृषिभवनाहवमंबरविपिनोद्यानाश्मभूषणं वसुभे ॥ २४ ॥
समरारंभविभूषणगजनरतुरगोष्ट्रशस्त्रनावाद्यम् ॥
मुक्ताफलरजतमयं वरुणर्क्षे वास्तुकर्माद्यम् ॥ २५ ॥
अजचरणर्क्षे कुर्यात्साहसजलयन्त्रशिल्पकर्माद्यम् ॥
मृद्धातुवादच्छेदनकृषिमहिषोष्ट्राजेभविक्रयणम् ॥ २६ ॥

परिणयनं व्रतबंधनसुरनरसदनप्रतिष्ठां च ॥
आहिर्बुध्न्ये भूपणमंवरवास्तुप्रवेशमभिपेकम् ॥ २७ ॥
स्थलजलभूपणमखिलं धामविधानं त्वमर्त्यमर्त्यानाम् ॥
करपीडनमुपनयनं मंगलमखिलं च पौष्णभे कार्यम् ॥ २८ ॥
स्थिरसंज्ञं भचतुष्टयमंबुजयोन्युत्तरात्रितयम् ॥
नरपतिपत्तनसदनं प्रवेशवीजादि सिद्ध्यते तत्र ॥ २९ ॥
दारुणभानि पुरंदरकोणपशिवसर्पदेवतानि स्युः ॥
दारुणबंधनदहनप्रहरणकर्माणि सिद्ध्यतां यान्ति ॥ ३० ॥
पूर्वात्रितयं पैतृभमुग्राख्यमिदं पञ्चकं याम्यम् ॥
मारणभेदनबंधनविपदहनं पंचके कार्यम् ॥ ३१ ॥
सुरसचिवाश्विनिहस्तताराः स्युः क्षिप्रसंज्ञितास्ताश्च ॥
औपधपण्यविभूपणशिल्पलताज्ञानकर्मसिद्धिः स्यात् ॥ ३२ ॥
मृदुवृन्दं भचतुष्टयमंत्यत्वाष्ट्राख्यसौम्यमित्रर्क्षम् ॥
मंगलवनिताभूपणमंदिरगीतादि सिध्यते तत्र ॥ ३३ ॥
भद्वितयं श्वसनसखं चेन्द्राग्निभं मिश्रसंज्ञे तत् ॥
निखिलानि च साधारणकार्याण्युग्राणि कार्याणि ॥ ३४ ॥
अदितिश्रुतिभात्रितयं चरसंज्ञं पंचमरुद्धं च ॥
वाहनकर्मविभूपणचरकार्योद्यानमंत्रसिद्ध्ये तत् ॥ ३५ ॥
कथितान्यपि लघुवृंदे चरसंज्ञे तानि कार्याणि ॥
मणिमुक्ताहेमफलसद्रजतत्रपुसीसकर्माणि ॥ ३६ ॥
मृदुवृंदे कथितान्यपि स्थिरवृंदे तानि कार्याणि ॥
चरधिष्ण्ये कथितान्यपि कार्याणि लघुगणे नूनम् ॥ ३७ ॥
यद्यद्दारुणभोक्तं तत्तत्कर्म त्वथोग्रभे कार्यम् ॥
साधारणमिश्राख्यं क्रूरोग्रं तीक्ष्णदारुणं तुल्यम् ॥ ३८ ॥
साधारणवृन्दोक्तं यत्कर्माद्यं क्रूरभे सदा कार्यम् ॥

ध्रुवमचलं क्षिप्रलघु चरं चलं मैत्रमृदुसंज्ञे ॥ ३९ ॥
साधारणमिश्राख्यं क्रूरोग्रं तीक्ष्णदारुणं तुल्यम् ॥
निखिलेष्वपि धिष्ण्येष्विह सामान्यं कार्यमित्युक्तम् ॥
तत्तत्प्रकरणकथितं तदेव मुख्यं विजानीयात् ॥ ४० ॥
पुष्ये धनिष्ठास्वदितौ हरीन्द्वोस्त्वाष्ट्रे करान्त्ये तिसृषूत्तरासु ॥
दस्रे समैत्रेऽपि च कर्णवेधः शुभप्रदो व्यर्कजवासरेषु ॥ ४१ ॥
धातृद्वये कोणपपितृपुष्ये हस्तत्रये त्र्युत्तरमैत्रभेषु ॥
पौष्णे धनिष्ठास्वथ वाश्विनीषु बीजोप्तिरुत्कृष्टफलप्रदा स्यात् ॥ ४२॥
पूर्वात्रये मूलमृगादिपंचस्वथाश्विनीषु त्रितयेषु हस्तात् ॥
सविष्णुधिष्ण्येष्वपि सर्वविद्याप्रारंभ इष्टः शुभवासरेषु ॥ ४३ ॥
हस्तादिपंचस्वथ धातृपौष्णदास्रादिताज्ये तिसृपूत्तरासु ॥
नवांबरं धार्यमथो ज्ञजीवशुक्रांशलग्नेषु शुभोदये वा ॥ ४४ ॥
मित्रेंदुपौष्णोत्तररोहिणीषु देवेज्यवारीश्वरवारिभेषु ॥
प्रारंभणं सर्वजलाशयानां कार्यं सितेन्द्वंशकवारलग्ने ॥ ४५ ॥
मृदुध्रुवक्षिप्रचरेषु भेषु नवान्नभुक्तिर्विहिता शिशूनाम् ॥
शुभांशलग्नेषु च वासरेषु समेषु मासेषु च षष्ठमासात् ॥ ४६ ॥
पूर्णेन्दुलग्नांशकवासरेषु नवान्नभोक्ता सततं सदन्नदः ॥
क्षीणेंदुलग्नांशकवासरेषु स भिक्षुकः स्यादथ पीडितात्मा ॥ ४७ ॥
ध्रुवोग्रसाधारणदारुणर्क्षे निक्षिप्तमर्थं त्वथवा प्रनष्टम् ॥
चौरैर्हृतं दत्तमुपप्लवे वा विष्टयां च पाते तु न लभ्यते तत् ॥ ४८ ॥
मघाविशाखानलसार्पयाम्यनैर्ऋत्यरौद्रेषु च सर्पदंष्टः ॥
सुरक्षितो विष्णुरथेन सोऽपि प्राप्नोति कालस्य मुखं मनुष्यः ॥ ४९ ॥
पूर्वात्रयं स्वातिभुजंगरौद्रसुरेश्वरर्क्षेषु च यस्य रोगः ॥
स्याद्रक्षितुं देवचिकित्सकोऽपि क्षितावशक्तः किल रोगिणं तम् ॥५० ॥
... मित्रपौष्णे मासाद्विमुक्तिः शशिविश्वधिष्ण्ये ॥

रोगस्य मुक्तिः पितृदैवधिष्ण्ये वारैर्भवेद्विंशतिभि श्च नूनम् ॥ ५१ ॥
पश्चाद्द्विदैवेंद्रकरेषु भेषु मूलाश्विनाग्नित्रितये नवाहात् ॥
तोयेशचित्रांतकविष्णुभेषु नैरुज्यमेकादशभिर्दिनैश्च ॥ ५२ ॥
पुष्ये त्वहिर्बुध्न्यपुनर्वसौ च ब्राह्मर्यमर्क्षेषु च सप्तरात्रात् ॥
ऋक्षेशरूपं कनकेन कृत्वा तल्लिंगमंत्रैश्च सुगंधपुष्पैः ॥ ५३ ॥
वस्त्राक्षतैर्गुग्गुलधूपदीपैर्नैवेद्यतांबूलफलैश्च सम्यक् ॥
पूजां च कृत्वामयनाशनाय द्विजाय दद्यादतुलं शिवाय ॥ ५४ ॥
मृदुध्रुवक्षिप्रचरेषु मूलमघाविशाखासु हलप्रवाहम् ॥
धान्याभिवृद्ध्यै प्रथमं प्रकुर्यात्समुष्कसंपूर्णगुणैर्वृषैश्च ॥ ५५ ॥
द्विदैववारीशशशांकमूलध्रुवेषु तिष्यार्यमपौष्णभेषु ॥
वनौषधीगुल्मलतादिकानामारोपणं नूनमुपैति शस्तम् ॥ ५६ ॥
शशांकतोयेशकरान्त्यमित्रध्रुवाम्बुपित्र्ये वसुदैवते च ॥
उद्यानवाप्यादितडागकूपकार्याणि सिद्ध्यंति जलोद्धृतं तत् ॥ ५७ ॥
हस्तत्रये सौम्यहरित्रये च पौष्णद्वये पुष्यपुनर्वसौ च ॥
मैत्रे च सर्वाणि हि कुंजराणां कर्माणि शस्तान्यपि यानि तानि ॥५८॥
साधारणे दारुणभे तथोग्रे रिक्तातिथौ सूर्यकुजार्किवारे ॥
दुर्गादिकानां यजन प्रशस्तं क्षेत्राधिपस्यापि सुरासवाद्यैः ॥ ५९ ॥
त्वाष्ट्रध्रुवश्रीपतिभेषु रिक्तादशाष्टमीपातदिने पशूनाम् ॥
यात्राप्रवेशं न कदाचिदेव कुर्याच्च तेषामभिवृद्धिकांक्षी ॥ ६० ॥
तिस्रोत्तरामित्रगुरुश्रविष्ठाहस्तेन्दुवारीश्वरपौष्णभेषु ॥
संगीतनृत्यादिसमस्तकर्म कार्यं विभौमार्कजवासरेषु ॥ ६१ ॥
पूर्वात्रये पुष्यपुनर्वसौ च मित्रत्रये पौष्णवसुद्वये च ॥
दस्रेंदुहस्तद्वितयेषु भेषु गवां प्रकुर्यात्क्रयविक्रयं हि ॥ ६२ ॥
पौष्णद्वयेन्दुश्रवणत्रये च हस्तत्रये पुष्यपुनर्वसौ च ॥
शस्तं नृपाणामवलोकनं तद्विशेषतस्तिग्मरुचेश्च वारे ॥ ६३ ॥

हस्तत्रये पुष्यपुनर्वसौ च शशाङ्कविष्णुत्रितयेऽश्विनीषु ॥
पौष्णेन्द्रधिष्ण्ये क्षुरकर्म शस्तं व्यर्कारशन्यंशकवारलग्ने ॥ ६४ ॥
अष्टाब्जजर्क्षः पितृपंचकश्च षड्वह्निधिष्ण्यश्चतुरर्यमर्क्षः ॥
त्रिमैत्रभः पद्मजसंनिभोऽपि क्षौरी नरोऽब्दान्निधनं गतः सः ॥ ६५ ॥
महीभृता पंचमपंचमेऽह्नि क्षौरं च कार्यं हितमुक्तभेषु ॥
न लभ्यते चेत्तु तदुक्तधिष्ण्यं तद्भोदये वा निखिलं विधेयम् ॥ ६६ ॥
यात्राहवेऽप्युत्कटभूपिते वा भुक्तोत्तरे रात्रिषु सन्ध्ययोश्च ॥
क्षौरं न कुर्यात्खलु चात्मनश्च श्रियाभिलाषी न कदाचिदेव ॥ ६७ ॥
भूदेवभूमीशनिमित्ततोऽपि बंधाद्विमुक्तो मृतसूतकेऽपि ॥
आधानकाले निखिलाधराणां क्षौरं विधेयं खलु निन्दितर्क्षे ॥ ६८ ॥
स्वातौ मघायां निर्ऋतौ ध्रुवेषु मित्रेन्दुहस्तेषु च कन्यकानाम् ॥
पाणिग्रहस्त्विष्टफलप्रदः स्यादविद्धभेष्वेव गुणान्वितानाम् ॥ ६९ ॥
पौष्णद्वये मित्रहरिद्वयेन्दुहस्तादितीज्येषु च भेषु नूनम् ॥
यानं नृणामिष्टफलप्रदं स्यात्त्यक्त्वा त्रिपंचादिमसप्तभानि ॥ ७० ॥
मघाविशाखानिलमंबुसार्परुद्रांतकत्वाष्ट्रसमीरणानि ॥
यानेष्वनिष्टान्यपराणि भानि न शोभनान्येव न निन्दितानि ॥ ७१ ॥
ऐन्द्राजपादाब्जजभार्यमाणि शूलानि भानि क्रमतश्च दिक्षु ॥
न याति याता यदि शूलभेषु सुरेशतुल्यः समरे बलेन ॥ ७२ ॥
सर्वद्वारिकधिष्ण्यान्यमरेज्यादित्यमैत्रदस्रसंज्ञानि ॥
तत्र तु यायान्नियतं धनकीर्तिर्लभ्यतेऽप्यचिरात् ॥ ७३ ॥
स्थिरसाधारणधिष्ण्यैः पूर्वाह्णे नैव गमनं तत् ॥
गमनं न दारुणार्क्षे दिनदलसमये न कार्यमनवरतम् ॥ ७४ ॥
क्षिप्रैर्नापरवासरसमये मृदुमिश्रैर्न रात्रिमुखे ॥
उग्रगणैर्निशिसमये चरधिष्ण्यैरुषसि न श्रेष्ठम् ॥ ७५ ॥

सर्वस्मिन्नपि समये सर्वासु च दिग्विदिक्ष्वेव ॥
सर्वद्वारिकधिष्ण्यान्यभिशुभदान्यतुलमखिलनृणाम् ॥ ७६ ॥
वस्वपराद्धर्तिपंचकधिष्ण्ये गेहस्य गोपनं नैव ॥
दक्षिणदिङ्मुखगमनं दाहं प्रेतस्य काष्ठसंग्रहणम् ॥ ७७ ॥
परकृतदोषं निखिलं निहंति पुष्यः परो न पुष्यकृतम् ॥
द्वादशनैधनगेन्दौ बलवान्पुष्यस्त्वभीष्टदः सततम् ॥ ७८ ॥
प्रत्यरिनैधनसंज्ञौ विपत्करौ वापि जन्मसंज्ञो वा ॥
पाणिग्रहणं मुक्त्वा नूनं सर्वार्थसिद्धिदः पुष्यः ॥ ७९ ॥
मृगगणमध्ये सिंह उडुगणमध्ये तथैव पुष्यश्च ॥
निजबलसहितोऽप्येवं त्रिविधोत्पातैर्न शक्तिमान्निहितः ॥ ८० ॥
लघुधिष्ण्ये स्थिरमृदुभे विष्णुभेषु च सर्वदा कार्यम् ॥
वरतुरगाखिलकर्म त्राणं तनुमस्तकादीनाम् ॥ ८१ ॥
पूर्वात्रयभुजगान्तकपितृद्विदैववह्निमूलानि ॥
पातालवदनभानि त्वेषु तु कार्यं त्वधोमुखं कर्म ॥ ८२ ॥
दस्रेन्द्विन्द्रकरादितिमैत्रमरुत्त्वाष्ट्रपौष्णानि ॥
पार्श्वाननभान्येषु तु पार्श्वाननकार्यमखिलं तत् ॥ ८३ ॥
हरिहरधान्युत्तरवसुवारीशेज्यधिष्ण्यगणम् ॥
ऊर्द्ध्वमुखाख्यं त्वत्र तु कार्याण्यखिलानि कार्याणि ॥ ८४ ॥
पितृवसुतिष्येन्द्वनलन्युत्तरभाग्याद्विदैवचित्राणि ॥
देवचिकित्सककोणपसहितान्येतानि कुलभानि ॥ ८५ ॥
अजचरणादितिपूषाधातृमरुद्विष्णुवारीशशक्राणि ॥
अहियमघातृजलान्युपकुलभान्यन्यानि कुलभानि ॥ ८६ ॥
उपकुलभेषु च याता विजयं प्राप्नोत्यसंशयं क्षिप्रम् ॥
कुलभेषु च भंगः स्याद्यातुः संधिस्तयोः कुलाकुलभे ॥ ८७ ॥

---

१ चरभे इ पा

कुलभेषु च यातास्ते मनुजा भवंति कुलमुख्याः ॥
उपकुलभे परविभवाद्वोक्तारस्त्वन्यभेषु सामान्याः ॥ ८८ ॥
रविचंद्रसुरेज्ययमाः कुलाख्या ह्युपकुलौ च सितभौमौ ॥
कुलाकुलजः शशितनयः संधिकृदुभयोः क्षितीशयोर्नित्यम् ॥ ८९ ॥
अंधकमथ मंदाख्यं मध्यमसंज्ञं सुलोचनं पश्चात् ॥
पर्यायेण च गणयेच्चतुर्विधं ब्रह्मधिष्ण्यतः ॥ ९० ॥
रविरविजभौमवारे भद्रायां विपमपादमृक्षं चेत् ॥
त्रिपुष्कराख्यो योगो त्रिगुणफलो यमलभैर्द्विगुणम् ॥ ९१ ॥
त्रितयं गवां च दद्याद्दोषस्यापनुत्तये विद्वान् ॥
द्वितयं द्विपुष्करेऽपि च तिलपिष्टैर्विप्रमुख्येभ्यः ॥ ९२ ॥
गुणगुणऋतुपवनगुणेन्दुकृताग्निपवनशराः ॥
द्विभुजशरेन्द्विन्दुयुगयुगाग्निरुद्राब्धिनेत्रगुणाः ॥ ९३ ॥
वेदशतद्विद्विरदा दास्रादीनां च तारकासंख्या ॥
हृतनष्टादिषु कार्यं तारकसंख्यैः पृथक् पृथग्रूपैः ॥ ९४ ॥
अश्वमुखसमानरूपं योन्याकारं च नापितक्षुरवत् ॥
सुरगृहसदृशं शश्वन्मस्तकसदृशं मृगस्यैव ॥ ९५ ॥
मणिनिभमोकःसदृशमाशुगसदृशं च चक्रसंकाशम् ॥
प्राकारमञ्चशय्या हस्ताकारं च मौक्तिकाकारम् ॥ ९६ ॥
रत्ननिभं तोरणवत् बलिसदृशं कुण्डलाकारम् ॥
केसरिविक्रमसदृशं शय्याकारं गजेन्द्रदन्ताभम् ॥ ९७ ॥
वरशृंगाटकरूपं विकसितपद्मोपमं नित्यम् ॥
वरशय्यासदृशमतः फलसदृशं मातुलुङ्गस्य ॥ ९८ ॥
अश्वमुखतारकाणां कथितानीमानि मुखरूपाणि ॥
दैवविदखिलं सम्यग्ज्ञात्वा सर्वं वदेन्नियतम् ॥ ९९ ॥
अर्कगतागतसंस्थं भत्रितयं नेष्टमुभयतस्त्विष्टम् ॥

षोडशधिष्ण्यं नवकं शिष्टमनिष्टं च लागले चक्रे ॥ १०० ॥
अभिजिद्भोगमेतद्विश्वेदेवान्त्यपादमखिलं यत् ॥
आद्यश्चतस्रो नाड्यो हरिभस्यैतच्च रोहिणीविद्धम् ॥ १०१ ॥
आरार्कार्क्यहिकेतुभिराक्रांतं विद्धभं च तत्सर्वम् ॥
मङ्गलकार्ये सततं त्याज्यं चोत्पातदूषितं धिष्ण्यम् ॥ १०२
पंचशलाकाचक्रे पाणिग्रहणे भवेधविधिरुक्तः ॥
शस्तः शुभमित्रकृतः सप्तशलाकजमितरत्र ॥ १०३ ॥
निहितं त्रिविधोत्पातैः क्रूराक्रांतं च विद्धभं निखिलम् ॥
त्याज्यं तच्छुभकर्मणि न पादतः पातधिष्ण्यं च ॥ १०४ ॥
तक्षकविषाग्निदग्धः स नरो मन्यते किमेकदेशो वा
तं मृतधिष्ण्यं निखिलं मृतभे च कृतं मृत्युमेवैति ॥ १०५ ॥
नक्षत्रे यो दोषो न हंति राशिं न शक्यते हंतुम् ॥
तद्वात्रमेव गरलं पित्रादीनां न हन्यते यद्वत् ॥ १०६ ॥
लघुमैत्रध्रुवमृदुभे सितेन्दुबुधजीववारेषु ॥
हेमरजतादिभाजनभोजनमारोग्यममृतयोगेषु ॥ १०७ ॥
हस्तत्रये पुष्यपुनर्वसौ च विष्णुत्रये चाश्विनपौष्णभेषु ॥
मित्रेन्दुमूलेषु च सूर्यवारे भैषज्यमुक्तं कुजवासरेषु ॥ १०८ ॥
अदितिस्थिरमरुदहिधिष्ण्यं शुक्रेंदुवासरे त्यक्त्वा ॥
परवासरऋक्षेषु तु शुभदं स्नानं च रोगमुक्तानाम् ॥ १०९ ॥
क्षिप्राचलचलमृदुभे रिक्तामावर्जितेषु दिवसेषु ॥
निखिलेषु च वारेषु त्रिपुष्करे भूषणं धार्यम् ॥ ११० ॥
स्थिरसाधारणचरभे लघुमैत्रे व्यर्कजेषु वारेषु ॥
तेषामेव विलग्ने मणिकनकमयं विभूषणं धार्यम् ॥ १११ ॥
क्षिप्रमृदुध्रुवचरभे शशिसितयोर्वासरेषु तल्लग्ने ॥
मुक्ताफलरजतमयं भूषणमखिलं सवज्रकं धार्यम् ॥ ११२ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां नक्षत्राध्यायश्चतुर्दशः ॥ १४ ॥

## अथ योगाध्यायः १५ ।

विष्कंभः प्रीतिरायुष्मान्सौभाग्यः शोभनाह्वयः ॥
अतिगंडः सुकर्माख्यो धृतिः शूलोऽथ गंडकः ॥ १ ॥
वृद्धिर्ध्रुवाख्यो व्याघातो हर्षणो वज्रसंज्ञकः ॥
सिद्धियोगो व्यतीपातो वरीयान्परिघः शिवः ॥ २ ॥
सिद्धिः साध्यः शुभः शुक्लो ब्रह्मैंद्रो वैधृताह्वयः ॥
सप्तविंशति योगास्ते स्वनामफलदाः स्मृताः ॥ ३ ॥
विरुद्धयोगेषु य आद्यपादः शुभेषु कार्येषु विसर्जनीयः ॥
सवैधृताख्यो व्यतिपातयोगः सर्वोऽपि नेष्टः परिघार्द्धमाद्यम् ॥ ४ ॥
तिस्रस्तु नाड्यः प्रथमे च वज्रे गण्डातिगंडेऽपि च षट् च षट् च ॥
व्याघातयोगे नव पंच शूले शुभेषु कार्येषु विवर्जनीयाः ॥ ५ ॥
अंत्यातिगंडपरिघव्यतिपातपूर्वव्याघातगंडवरशूलमहाशनीषु ॥
चित्रानुराधपितृपन्नगदस्रभेषु सादित्यमूलशशिसूरिषु मूर्ध्नि भेषु ॥ ६ ॥
रेखामेकामूर्ध्वगां षट् च सप्त तिर्यक्कृत्वाप्यत्र खार्जूरचक्रे ॥
तिर्यग्रेखासंस्थयोश्चन्द्रभान्वोर्हक्संपातो दोष एकार्गलाख्यः ॥ ७ ॥
खरकरतुहिनांशोर्दृष्टिसंपातजात-।
स्त्वनलमयशरीरश्चोद्गिरन्वह्निसंघान् ॥
भुवि पतति जनानां मङ्गलध्वंसनाय ॥
गुणगणशतसंघैरप्यवार्योऽग्निकोपः ॥ ८ ॥
चौलं च बीजरोपं च स्त्रीसंगं दंतकल्पनम् ॥
काष्ठकर्म रिपूच्चाटं विष्कंभे तु प्रकारयेत् ॥ ९ ॥
मित्रत्वं लेपनं चैव भूषणं भूपरिग्रहम् ॥
राजवश्यं महोत्साहं प्रीतियोगे प्रकारयेत् ॥ १० ॥
बीजवापं धनग्राहमायुरारोग्यकर्म च ॥
विवाहं व्रतबन्धं च ह्यायुष्मति च कारयेत् ॥ ११ ॥

वस्त्रबंधमलंकारं सौभाग्यं लेपकर्म च ॥
सोमयानं सुरापानं सौभाग्ये तु प्रकारयेत् ॥ १२ ॥
विवाहदानकर्माणि भूषणं भूपरिग्रहम् ॥
राजाभिषेकमायुष्यं शोभने च प्रकारयेत् ॥ १३ ॥
विग्रहं निग्रहं चैव रोदनं वधबन्धनम् ॥
छेदनं वंचनं क्षुद्रमतिगंडे प्रकारयेत् ॥ १४ ॥
चित्रकर्म गृहस्थापं कल्याणं भूपरिग्रहम् ॥
राजाभिषेककर्माणि सुकर्मणि च कारयेत् ॥ १५ ॥
प्राकारं तोरणादीनि देवालयगृहाणि च ॥
सेतुबन्धं गजारोहं धृतियोगे तु कारयेत् ॥ १६ ॥
क्रूरकर्म रिपूच्चाटं मारणं दाहनं तथा ॥
बंधनं चावमानं च शूलयोगे प्रकारयेत् ॥ १७ ॥
शत्रुघातं रिपूच्चाटं तडागं सेतुबंधनम् ॥
क्षेत्रसेवां गदायुद्धं गंडयोगे प्रकारयेत् ॥ १८ ॥
बीजवापं धनग्राहं विवाहं वस्त्रबन्धनम् ॥
तडागं सेतुबन्धं च वृद्धियोगे प्रकारयेत् ॥ १९ ॥
वस्त्रबन्धं गृहस्थापं तडागं सेतुबन्धनम् ॥
भूषणं बहुरत्नं च ध्रुवयोगे प्रकारयेत् ॥ २० ॥
बन्धनं रोधनं चैव घातनं छेदनं तथा ॥
क्रूराणि बहुकर्माणि व्याघाते तु प्रकारयेत् ॥ २१ ॥
वस्त्रबन्धं गजारोहं विवाहं भूपनिग्रहम् ॥
राजाभिषेकमायुष्यं हर्षणे तु प्रकारयेत् ॥ २२ ॥
शस्त्रकर्म रिपूच्चाटं शस्त्राणां च परिग्रहम् ॥
सेनाधिपत्यं सौम्यं च वज्रयोगे प्रकारयेत् ॥ २३ ॥
हारकाञ्चीकलापं च हस्ताभरणमेव च ॥

अङ्गुलीभूषणं चैव सिद्धियोगे प्रकारयेत् ॥ २४ ॥
दानं वेदविदे दद्याच्छ्रद्धासंकल्पनं तथा ॥
रिपूच्चाटं विषादीनि व्यतीपाते तु कारयेत् ॥ २५ ॥
द्वाविंशतिः समुत्पत्तौ भ्रमणे चैकविंशतिः ॥
उत्तिष्ठे सप्त घटिकाः पतिते घटिका दश ॥ २६ ॥
पूर्वे लक्षगुणं दानं भ्रमणे कोटिरुच्यते ॥
उत्तिष्ठे सप्त कोटयस्तु निपाते चाक्षयं भवेत् ॥ २७ ॥
शंखचक्रगदापद्मलम्बभ्रूदीर्घनासिकम् ॥
अष्टनेत्रं चतुर्वक्त्रं विस्तीर्णं शतयोजनम् ॥ २८ ॥
दीर्घबाहुं महारौद्रं तीक्ष्णदंष्ट्रं महोदरम् ॥
व्यतीपातवपुश्चेदं शोभने मृत्युकारकम् ॥ २९ ॥
हारकाञ्चीकलापं च हस्ताभरणमेव च ॥
अङ्गुलीभूषणं चैव वरीयसि च कारयेत् ॥ ३० ॥
बन्धनं छेदनं चैव भेदनं विपदीपनम् ॥
तथान्यत्क्रूरकर्माणि परिघे तु प्रकारयेत् ॥ ३१ ॥
मालिकां कटिसूत्रं च घण्टाभरमेव च ॥
कर्णयोर्भूषणं चैव शिवयोगे प्रकारयेत् ॥ ३२ ॥
प्रतिष्ठा देवतानां च गृहाणि नगराणि च ॥
प्राकारतोरणादीनि सिद्धियोगे प्रकारयेत् ॥ ३३ ॥
देवतागुरुपूजां च विद्यापूजां तथैव च ॥
मन्त्रपूजान्यनेकानि साध्ययोगे प्रकारयेत् ॥ ३४ ॥
बीजवापं गृहोत्साहं धनधान्यादिसंग्रहम् ॥
सर्वरत्नमहाग्राह्यं शुभयोगे प्रकारयेत् ॥ ३५ ॥
लेपनं भूषणं चैव राजसंदर्शनं तथा ॥
कन्यादानं महोत्साहं शुक्लयोगे प्रकारयेत् ॥ ३६ ॥

शान्तिकं पौष्टिकं चैव तडागं सेतुबंधनम् ॥
चोलोपनयनं क्षौरं ब्रह्मयोगे प्रकारयेत् ॥ ३७ ॥
कन्यादानं गजारोहं स्त्रीसङ्गं वस्त्रबन्धनम् ॥
काव्यगायनवाद्यानि योगे चैन्द्रे प्रकारयेत् ॥ ३८ ॥
घातनं परराष्ट्राणां वञ्चनं दाहनं तथा ॥
छेदनं क्रूरकर्माणि वैधृतौ तु प्रकारयेत् ॥ ३९ ॥
योगस्य सप्तविंशांशो योगमानं भवेदिह ॥
एकस्मिन्नपि योगेऽपि सर्वे योगा भवन्ति हि ॥ ४० ॥
सूर्याचन्द्रमसोर्धिष्ण्ययोगाज्जाता यतस्ततः ॥
ऋक्षेशा एव योगेशा ज्ञातव्याः सर्वकर्मसु ॥ ४१ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां योगाध्यायः पञ्चदशः ॥ १५ ॥

---

## अथ करणाध्यायः १६ ।

आद्यं ववं बालवकौलवाख्ये ततैतिलं तद्गरसंज्ञकं च ॥
वणिक्च विष्टिः करणानि सप्त चराणि यानि क्रमशो भवन्ति ॥ १ ॥
तिथ्यर्धमाद्यं शकुनिर्द्वितीयं चतुष्पदं नागकसंज्ञितं च ॥
किंस्तुघ्नमेतान्यचराणि कृष्णचतुर्दशीपश्चिमभागतः स्युः ॥ २ ॥
इन्द्रो विधाता मित्राख्यस्त्वर्यमा भूर्हरिप्रिया ॥
कीनाशश्चेति तिथ्यर्द्धनाथाः स्युः क्रमतस्त्वमी ॥ ३ ॥
कलिश्च रक्षो भुजगः पवनश्च स्थिरेश्वराः ॥
विज्ञेयाः सर्वकार्येषु तिथ्यर्द्धेशा ववादयः ॥ ४ ॥
चरस्थिरद्विजहितः पशुधान्यकरादि यत् ॥
धातुवादवणिग्धान्यकर्म सर्वं ववे हितम् ॥ ५ ॥
मांगल्योत्सवपानादि वास्तुकर्माखिलं च यत् ॥

---

१ धान्यकरादि इति पाठः ।

नृपाभिषेकसंग्रामकर्म सिद्ध्यति बालवे ॥ ६ ॥
गजोष्ट्राश्वायुधोद्यानविपिनाद्यखिलं च यत् ॥
बालवोक्ताखिलं कर्म कौलवे सिद्ध्यति ध्रुवम् ॥ ७ ॥
सन्धिविग्रहयात्रादि क्रयविक्रमकर्म यत् ॥
तडागकूपखननं कार्यं तैतिलसंज्ञके ॥ ८ ॥
प्राकारोद्धरणं सर्वजलकर्माखिलं च यत् ॥
सर्वतिथ्यर्द्धकथितं कर्म सर्वं गरे हितम् ॥ ९ ॥
मूलकर्माखिलं धातुजीवकर्माखिलं च यत् ॥
उक्तानुक्ताखिलं कर्म ध्रुवं वणिजि सिद्ध्यति ॥ १० ॥
वधबन्धविषाग्न्यस्त्रछेदनोच्चाटनादि यत् ॥
तुरङ्गमद्विपोष्ट्रादि कर्म विष्ट्यां च सिद्धयति ॥ ११ ॥
न कुर्यान्मङ्गलं विष्ट्यां जीवितार्थी कदाचन ॥
कुर्वन्नज्ञस्तदा क्षिप्रं तत्सर्वं नाशतां व्रजेत् ॥ १२ ॥
रुद्रस्य भालनेत्राग्निज्वालामालासमुद्भवा ॥
कृतकार्या ततः पृथ्व्यां व्यपतद्दग्धमङ्गला ॥ १३ ॥
तस्मात्त्याज्या परीता वा विपरीतापि मङ्गले ॥
तन्माहात्म्यमजानन्तो भद्रायां यदि मङ्गलम् ॥ १४ ॥
कुर्याद्वंशक्षयं तस्य स भवेन्नष्टमङ्गलः ॥
तस्मात्तत्र शुभं कर्म मनसापि न कारयेत् ॥ १५ ॥
नाड्यः पञ्च मुखे गलेऽथ घटिका वक्षो दशैकायुताः ॥
नाभिस्तद्घटिकाश्चतुष्टयमिताः षण्नाडिकास्तत्कटिः ॥ १६ ॥
पुच्छं तन्नाडिकास्तिस्रः पुच्छान्तं मुखतः क्रमात् ॥
विष्टेरङ्गविभागोऽयं फलं वक्ष्ये पृथक्पृथक् ॥ १७ ॥
कार्यस्य नाशो वदने गले तु मृत्युः सदा वक्षसि चार्थहानिः ॥
नाभौ च विघ्नं त्वथ बुद्धिनाशः कट्यां जयः संयति पुच्छभागे ॥ १८ ॥

सुरासुराणां समरेऽमरेषु पराजितेष्वीश्वरकोपदृष्टेः ॥
जाता सुरघ्नी मुदितैः सुरौघैर्विष्टिर्नियुक्ता करणावसाने ॥ १९ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां करणाध्यायः षोडशः ॥ १६ ॥

## अथ मुहूर्ताध्यायः १७।

शिवसर्पमित्रपितरो वसुजलविश्वाब्जजद्रुहिणः ॥
सुरपाद्विदैवदनुजाः शम्बरनाथार्यमाख्यभगाः ॥ १ ॥
दिवसमुहूर्ताः कथिता दशपञ्चमितास्तथैव रात्रेश्च ॥
रुद्राजपादिवाहिर्बुध्न्याख्यस्ततश्च पूषाख्यः ॥ २ ॥
अश्वियमवह्निधातृसुधाकरास्त्वदितिसुरमन्त्री ॥
हरिस्तीक्ष्णकरत्वाष्ट्रप्रभञ्जनाश्चेति पञ्चदश ॥ ३ ॥
पञ्चदशांशो दिवसे क्षणमानं तत्त्रियामायाः ॥
नक्षत्रेश्वरसदृशे क्षणे च तन्नामधिष्ण्यं तत् ॥ ४ ॥
यत्कर्म कथितमृक्षे यस्मिंस्तत्कर्म तत्क्षणे कार्यम् ॥
दिक्शूलादिकमखिलं पारिघदण्डं च विज्ञेयम् ॥ ५ ॥
निर्ऋतपितृसार्पाख्या रौद्रेन्द्राग्नीश्वराख्यभगाः ॥
पापमुहूर्तास्त्वेते शुभकर्मणि दुःखशोकदा नित्यम् ॥ ६ ॥
द्युमुहूर्तास्त्ववशिष्टा सौम्याः शुभदाश्च मङ्गले नूनम् ॥
शान्तिकपौष्टिककर्मसु विशेषतस्तत्प्रदाः सततम् ॥ ७ ॥
रात्रिमुहूर्तास्त्वजपाद्रौद्राग्नेयाख्ययाम्यसंज्ञाश्च ॥
क्रूरतराश्चत्वारस्त्वनिष्टदास्त्विष्टदास्त्वपरे ॥ ८ ॥
अर्यम्णस्त्वर्कवारे हिमकरदिवसे राक्षसब्रह्मसंज्ञौ ।
पित्राग्नेयौ क्षणौ तौ क्षितिसुतदिवसे सौम्यवारेऽभिजिच्च ॥
दैत्याप्यौ जीववारे भृगुतनयदिने ब्राह्मपित्र्यौ मुहूर्तौ ।
सार्पेशौ तिग्मरोचिप्रियसुतदिवसे वर्जनीया मुहूर्ताः ॥ ९ ॥
इति ब्रह्मर्षिवृद्धवसिष्ठवि० संहितायां मुहूर्ताध्यायः सप्तदशः ॥ १७ ॥

# अथ गोचरविचाराध्यायः १८।

कथयामि गोचरबलं सवेधबलमम्बराटानाम् ॥
सदसद्बलकथनार्थं विज्ञाते जन्मभे क्षितीशानाम् ॥ १ ॥
त्रिषडेकादशमे सूर्यः शुभदो ग्रहैर्न विद्धश्चेत् ॥
नवरिःफात्मजजलगैः स्वबलोपेतैर्विसूर्यसुतैः ॥ २ ॥
भवदशमाद्यकलत्रत्रिषट्सु निशाकरोऽत्र बली ॥
नैधनजलधीष्वर्थनवान्त्यगतैर्विबुधखेचरैर्न हतः ॥ ३ ॥
त्रिषडेकादशसहितो धरासुतः कामधर्मसुतसंस्थैः ॥
दिनकरतनयोऽपि शुभो न विद्ध्यते खचरैर्विनोष्णकरैः ॥ ४ ॥
दशमैकादशनिधनस्वबन्धुशत्रुस्थितः शुभः शशिजः ॥
निधनान्त्यप्रथमात्मजतृतीयस्थैर्विनेन्दुखेचरैर्न हतः ॥ ५ ॥
पञ्चमनवमायधनस्मरगः शुभदो गुरुर्न विद्धश्चेत् ॥
गृहकर्माद्यान्त्यत्रिस्थितखेचरैर्नास्तमितैः ॥ ६ ॥
आसुतनिधनाङ्कान्त्यभवगृहगतः शुक्रः शुभदो न हतः ॥
वसुमदनाद्यखधर्मसुतारिसहजायगैर्न विद्धस्तैः ॥ ७ ॥
वेधसमन्वितखचरा नृणां न दिशन्ति सत्फलं किञ्चित् ॥
व्यत्ययवेधविधानाद्दिशन्त्यशुभाः शुभफलं सततम् ॥ ८ ॥
गोचरबलचिन्तायां ये न विदन्ति यथाक्रमं चेति ॥
गोचरबलानभिज्ञा लोके यान्ति हास्यतां सुजनाः ॥ ९ ॥
अशुभेक्षितः कष्टफलः शुभेक्षितः सत्फलः खचरः ॥
शत्रुविलोकनसहिताः सर्वे ते निष्फलाः खचराः ॥ १० ॥
नीचगता रिपुविजिता रव्यभिभूताः स्वशत्रुगेहस्थाः ॥
भुजगा इव मन्त्रहता न भवन्ति कार्यक्षमा लग्ने ॥ ११ ॥
हिमकिरणः सितपक्षे द्वितीयनवपञ्चमगोऽपि शुभः ॥
गोचरबलविपर्ये वै विचटः पक्षे मितेतरे नूनम् ॥ १२ ॥

भवनान्त्यगताश्च यदा धिष्ण्यान्त्यगताश्च गगनचराः ॥
दद्युः परभवनफलं प्राग्भवनफलं च वक्रिता ये च ॥ १३ ॥
दशदिवसपञ्चदिनात्रिपक्षमतिचारवक्रयोर्दद्युः ॥
भौमाद्याः पंचमदिनप्राग्राशिफलं पंच मासांश्च ॥ १४ ॥
भवनादिगतौ फलदौ रविभौमौ मध्यगौ च गुरुशुक्रौ ॥
अन्त्यगतौ शनिशशिनौ सदैव फलदः शशाङ्कसुतः ॥ १५ ॥
राजालोकनसमये रविरार्यः करग्रहेषु बली ॥
रणसमये धरणिसुतः प्रयाणसमये सितोऽतिबली ॥ १६ ॥
दीक्षणसमये त्वसितः शशितनयो ज्ञानशिल्पविधौ ॥
निखिलेषु च कार्येषु चंद्रबलमुख्यमखिलनृणाम् ॥ १७ ॥
हिमकरवीर्याद्वीर्यं संश्रित्यैव ग्रहाश्च साध्वसाधुफलम् ॥
ददतीन्द्रियाणि मनसा सहितानि यथा स्वकार्यदक्षाणि ॥ १८ ॥
खचरेषु यदा विषमेष्वखिलनृणां व्याधिरर्थहानिः स्यात् ॥
सम्यग्विचार्य मनसा ग्रहशांतिं कारयेन्नृपतिः ॥ १९ ॥
उच्छ्रयपतनानि नृणां खचराधीनानि विशेषतो यस्मात् ॥
अखिलानामपि लोकानां वृद्धिस्तस्माद्ग्रहाश्च पूज्यतमाः ॥ २० ॥
मासि मास्ययने चन्द्रसूर्ययोर्ग्रहणेऽपि वा ॥
विषुवत्यर्कसंक्रांतौ व्यतीपाते दिनक्षये ॥ २१ ॥
पुण्येऽह्नि चन्द्रताराणां बलयुक्तौ च जन्मभे ॥
गृहस्येशानभागे तु मंडपं कारयेद्बुधः ॥ २२ ॥
षड्द्वादशाष्टभिर्हस्तैः षोडशैर्वा समन्ततः ॥
चतुर्द्वारसमायुक्तो तोरणाद्यैः समन्वितः ॥ २३ ॥
कुण्डं तन्मध्यभागे तु कारयेच्चतुरस्रकम् ॥
वितस्तिद्वयखातं यत्कुण्डं सचतुरंगुलम् ॥ २४ ॥
विप्राणां क्षत्रियाणां तदङ्गुलत्रयसंयुतम् ॥

वैश्यानां द्व्यङ्गुलाधिक्यं शूद्राणां हस्तमात्रकम् ॥ २५ ॥
प्रथमा मेखला तत्र द्वादशाङ्गुलविस्तृता ॥
चतुर्भिरङ्गुलैस्तस्याश्चोन्नतं च समन्ततः ॥ २६ ॥
तस्याश्चोपरि वप्रः स्याच्चतुरङ्गुलमुन्नतम् ॥
अष्टभिरङ्गुलैः सम्यग्विस्तीर्णं च समन्ततः ॥ २७ ॥
तस्योपरि पुनः कार्यो विप्रः सोऽपि तृतीयकः ॥
चतुरङ्गुलविस्तीर्णं चोन्नतं च यथाविधि ॥ २८ ॥
योनिश्च पश्चिमे भागे प्राङ्मुखी मध्यसंस्थिता ॥
षडङ्गुलैश्च विस्तीर्णा चायता द्वादशाङ्गुलैः ॥ २९ ॥
पृष्ठोन्नता गजस्यैव सच्छिद्रा मध्यमोन्नता ॥
एवं लक्षणसंयुक्तं कुण्डमिष्टार्थसिद्धये ॥ ३० ॥
अनेकदोषदं कुण्डं यत्र न्यूनाधिकं यदि ॥
तस्मात्सम्यक्परीक्ष्यैव कर्त्तव्यं शुभमिच्छता ॥ ३१ ॥
कुण्डस्येशानभागे तु पूजावेदीं प्रकल्पयेत् ॥
हस्तोन्नतां च विस्तीर्णां चतुरस्रां समन्ततः ॥ ३२ ॥
स्नात्वादौ कायशुध्यर्थं द्विजानुज्ञां लभेत्ततः ॥
आशिषो वाचनं कार्यं मधुपर्कपुरःसरम् ॥ ३३ ॥
ऋत्विजो वरयेत्पश्चात्कृतविद्याविशारदान् ॥
षोडशब्राह्मणाञ्छुद्धानदम्भानृतवर्जितान् ॥ ३४ ॥
तेषां मध्ये श्रेष्ठतममाचार्यं तं प्रकल्पयेत् ॥
लिखेदष्टदलं पद्मं वेदिकोपरि तण्डुलैः ॥ ३५ ॥
आदित्याद्यग्रहाणां च प्रतिमां कल्पयेत्ततः ॥
ताम्रेण कारयेत्सूर्यं स्फटिकेन निशाकरम् ॥ ३६ ॥
कुजं तु चन्दनेन ज्ञं सुवर्णेन गुरुं तथा ॥
रजतेन सितं सौरिं लोहेन तु विधुन्तुदम् ॥ ३७ ॥

सीसेन शुद्धकांस्येन केतुं कुर्यात्प्रयत्नतः ॥
यथारुचिप्रमाणेन प्रतिमां कल्पयेत्सुधीः ॥ ३८ ॥

वेदीमध्ये ललितकमले कर्णिकायामधःस्थः ।
सप्ताश्वोऽर्कोऽरुणरुचिवपुः सप्तरज्जुर्द्विबाहुः ॥
गोत्रे रम्ये बहुविधगुणे काश्यपाख्ये प्रसूतः ।
कालिङ्गाख्ये विषयजनितः प्राङ्मुखः पद्महस्तः ॥ ३९ ॥

आकृष्णेनेतिमन्त्रेण रविं ध्यात्वा समर्चयेत् ॥
अस्य मंत्रस्य च ऋषिर्हिरण्यस्तूपसंज्ञितः ॥ ४० ॥
त्रिष्टुप्छन्दो देवताऽर्को मंत्रोऽसौ सर्वकामदः ॥
अस्याधिदेवता रुद्रं स्थापयेद्दक्षिणे ततः ॥ ४१ ॥
मंत्रं तु त्र्यंबकं चास्य छन्दोऽनुष्टुप्ततो ऋषी ॥
वामदेववसिष्ठाख्यौ देवता परमेश्वरः ॥ ४२ ॥
सूर्यस्य स्थापयेद्वह्निं वामे प्रत्यधिदेवताम् ॥
ग्रहाधिदेवतांस्त्वेवं स्थापनीयाः प्रयत्नतः ॥ ४३ ॥
मंत्रोऽग्निदूतमित्यस्य ऋषिर्मेधातिथिस्तथा ॥
अग्निस्तु देवता च्छन्दो गायत्री पापमोचनी ॥ ४४ ॥
आग्नेयभागे सरथो दशाश्वश्चात्रेयजो यावनदेशजश्च ॥
प्रत्यङ्मुखस्थश्चतुरस्रपीठे गदाधराङ्गो हिमगुः सिताभः ॥ ४५ ॥
आप्यायस्वेतिमन्त्रेण यजेच्चन्द्रमसं सदा ॥
अस्य ऋषिर्गोतमाख्यो गायत्री देवता शशी ॥ ४६ ॥
गौरीर्मिमायमन्त्रेण गौरीं प्रत्यधिदेवताम् ॥
ऋषिर्दीर्घतमाश्चास्य जगती देवता उमा ॥ ४७ ॥
अस्याधिदेवतास्त्वापस्त्वापोहिष्ठामयो ऋचः ॥
सिन्धुद्वीपोऽस्य मन्त्रस्य गायत्री देवता ऋषिः ॥ ४८ ॥
याम्ये गतः शक्तिगदात्रिशूली वरप्रदो याम्यमुखोऽतिरक्तः ॥

कुजस्त्ववन्तीविषयास्त्रिकोणस्तस्मिन्भरद्वाजकुले प्रसूतः ॥ ४९ ॥
अग्निर्मूर्द्धेतिमंत्रेण सम्यग्ध्यात्वा कुजं यजेत् ॥
ऋषिर्विरूपो गायत्री देवताङ्गारकोऽस्य च ॥ ५० ॥
स्कन्दोऽधिदेवता त्वस्य सावित्री देवता गुहः ॥
मंत्रस्य स्कंदगायत्री स्कंदस्य प्रीतिदायिका ॥ ५१ ॥
स्योनापृथिव्यसौ मंत्रस्त्वितरा देवता मही ॥
गायत्री देवता भूमिस्तस्य मेधातिथिर्ऋषिः ॥ ५२ ॥
उदङ्मुखो मागधजो हरिस्थस्त्वात्रेयगोत्रः शरमंडलस्थः ॥
सखड्गचर्मोरुगदाधरो ज्ञस्त्वीशानभागे वरदः सपीतः ॥ ५३ ॥
अग्नेविवस्वदुरवसस्त्वितिमंत्रेण चन्द्रजम् ॥
प्रस्कण्वो बृहती छन्दस्त्वस्यास्ति देवता बुधः ॥ ५४ ॥
मंत्रेणेदं विष्णुरिति विष्णुः पूज्योऽधिदेवता ॥
ऋषिर्मेधातिथिच्छन्दो गायत्री देवता हरिः ॥ ५५ ॥
विष्णुं च देवतामन्यत्पुरुषसूक्तेन चार्चयेत् ॥
ऋषिर्नारायणोऽनुष्टुबन्यस्मिन्देवता ऋषिः ॥ ५६ ॥
सौम्ये सुदीर्घे चतुरस्रपीठे रथोऽङ्गिराः सौम्यमुखः सुपीतः ॥
द्रुन्द्राक्षमालाजलपात्रधारी सिंध्वाख्यदेशो वरदश्च जीवः ॥ ५७ ॥
बृहस्पते अतियदर्यो अनेन गुरुमर्चयेत् ॥
ऋषिरस्य प्रतिरथस्त्रिष्टुब्जीवोऽत्र देवता ॥ ५८ ॥
अस्याधिदेवता ब्रह्म ब्रह्मजज्ञानमित्यृचः ॥
तमर्चयेदृषिर्भर्गस्त्रिष्टुब्ब्रह्मैव देवता ॥ ५९ ॥
इन्द्रायेन्द्रो मरुत्वद्भस्त्वनेनेतरदेवतम् ॥
छन्दो ऋषिः कश्यपोऽस्य गायत्री देवता हरिः ॥ ६० ॥

---

१ बृहस्पते परिदीयेत्यनेन गुरुमर्चयेत् ॥ ऋषिरस्याप्रतिरथस्त्रिष्टुब्जीवोऽस्य देवता ॥ क्वचित्पुस्तके वा पाठः ।

प्राच्यां भृगुर्भोजकटे प्रजातः स भार्गवः पूर्वमुखः सिताभः ॥
सपञ्चकोणे सरथाधिरूढो दण्डाक्षमालावरदांबुपात्रः ॥ ६१ ॥
ध्यात्वा समर्चयेच्छुक्रं तत्रान्नादिति तदृचा ॥
त्रिष्टुबृषिर्भरद्वाजो देवता दनुरर्चितः ॥ ६२ ॥
अस्याधिदेवता शक्रस्त्वनेनैवार्चयेत्तु ताम् ॥
इंद्राणी देवता चास्य धृतिर्मेधातिथिर्ऋषिः ॥ ६३ ॥
मंत्रेणोत्तानपर्येण चास्य मेधातिथिर्ऋषिः ॥
इन्द्राणी देवता तत्र त्वनुष्टुप्छन्दसंज्ञितम् ॥ ६४ ॥
चापासने गृध्ररथः सुनीलः प्रत्यङ्मुखः काश्यपजः प्रतीच्याम् ॥
सशूलचापेषु वरप्रदश्च सौराष्ट्रदेशे प्रसवश्च सौरिः ॥ ६५ ॥
शन्नोदेवीत्यनेनैव मंत्रेण शनिमर्चयेत् ॥
अस्य सिन्धुद्वीप ऋषिर्गायत्री देवता शनिः ॥ ६६ ॥
यमोऽधिदेवता पूज्या त्वायङ्गौरित्यनेन च ॥
सर्पराज्ञी ऋषिश्चास्य गायत्री देवता यमः ॥ ६७ ॥
प्रजापतिस्त्वस्य शनेः प्रतिपूर्वाधिदेवता ॥
प्रजापतेनत्वदेतेत्यनेनैव यजेत्तु ताम् ॥ ६८ ॥
त्रिष्टुप्छन्दोऽस्य मन्त्रस्य स्वर्णगर्भ ऋषिस्ततः ॥
प्रजापतिर्देवतायां मन्त्रः स पापमोचकः ॥ ६९ ॥
पैठीनसो बर्बरदेशजातः शूर्पाऽऽसनः सिंहगमः सधूम्रः ॥
याम्यायने नैर्ऋतगः करालो वरप्रदः शूलसचर्मखड्गः ॥ ७० ॥
कयानश्चित्रआभुव इतिमंत्रेण चार्चयेत् ॥
गायत्री वामदेवोऽस्य ऋषी राहुश्च देवता ॥ ७१ ॥
कालोऽधिदेवता ब्रह्मजज्ञानामिति चार्चयेत् ॥
त्रिष्टुप्छंदो वामदेव ऋषिः कालोऽधिदेवता ॥ ७२ ॥
अपरा देवता सर्पा नमोऽस्त्विति समर्चयेत् ॥

अग्निर्ऋषिर्विराट्छन्दः सर्पाश्चास्याधिदेवताः ॥ ७३ ॥
वृकासनो जैमिनिगोत्रजोऽन्तर्वेदीसुदेशः सुविचित्रवर्णः ॥
याम्यायनो वायुदिशि प्रखड्गचर्मा शिखी चाष्टशतोऽथ चैकः ॥ ७४ ॥
केतुं कृण्वन्ननेनैव चार्चयेत्तं प्रयत्नतः ॥
मधुऽच्छन्दो ऋषिरस्य गायत्री देवता शिखी ॥ ७५ ॥
अस्याधिदेवता चित्रगुप्तो ज्ञात्वा तमर्चयेत् ॥
छंदोऽनुष्टुप्सोम ऋषिश्चित्रगुप्तोऽस्य देवता ॥ ७६ ॥
अस्याधिदेवता ब्रह्मा त्वेष ब्रह्म य इत्यृचा ॥
विश्वेदेवा ऋषिर्विराड्गायत्री ब्रह्मदेवता ॥ ७६ ॥
शनैः पाश्चिमतः स्थाप्य विनायकमथार्चयेत् ॥
गणानान्त्वेति जगती भर्गोर्षिदेवता स्वयम् ॥ ७८ ॥
तस्य दक्षिणतो दुर्गां जातवेदस इत्यृचा ॥
त्रिष्टुब्छन्दः कश्यपोऽस्य ऋषिर्दुर्गात्र देवता ॥ ७९ ॥
वायुतो दक्षिणे कोणे शिशुमन्त्रेण चार्चयेत् ॥
गौरी इति ऋषिश्चास्य गायत्री देवता मरुत् ॥ ८० ॥
दक्षिणे तस्य चाकाशमादित्यं च समर्चयेत् ॥
ऋषिर्भर्गोऽस्य गायत्री चाकाशो देवता ततः ॥ ८१ ॥
अश्विनौ दक्षिणे तस्य कार्यौ वै षोडशा ऋचा ॥
ऋषिः कण्वोऽस्य गायत्री च्छन्दोऽश्विनौ च देवते ॥ ८२ ॥
इंद्रश्चैरावतारूढो वज्रपाणिः शचीप्रियः ॥
स्वर्णवर्णः सहस्राक्षो नायकस्त्वमरेश्वरः ॥ ८३ ॥
पद्मपूर्वदलाग्रे च इन्द्रमिन्द्रश्च इत्यृचा ॥
वायुश्छन्द ऋषिरस्य गायत्री देवता स्वयम् ॥ ८४ ॥
अग्निः सुवर्णः सप्तार्चिः सप्तहस्तोर्द्ध्ववक्त्रकः ॥
स्वाहाप्रियो मेषगमः षडक्षः स्रुवस्रुवायुधः ॥ ८५ ॥

आग्नेय्यामर्चयेदग्निमग्निंदूतमनेन च ॥
ऋषिर्मेधातिथिश्छंदो गायत्री देवताऽनलः ॥ ८६ ॥
इलप्रियो दण्डधरो यमो महिषवाहनः ॥
रक्तवर्णो हि लोकानां स्वस्वकर्मफलप्रदः ॥ ८७ ॥
यमं यजेद्याम्यदले यमाय सोममित्यृचा ॥
ऋषिः शातातपोऽनुष्टुप्छन्दोऽसौ देवता यमः ॥ ८८ ॥
खड्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः ॥
ऊर्द्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ॥ ८९ ॥
मोषुणस्त्वितिमन्त्रेण नैर्ऋत्यां निर्ऋतिं यजेत् ॥
गायत्री घोरकण्ठोऽस्य निर्ऋतिर्देवता स्वयम् ॥ ९० ॥
नागपाशधरो रत्नभूषणः पद्मिनीप्रियः ॥
वरुणोऽम्बुपतिः स्वर्णवर्णो मकरवाहनः ॥ ९१ ॥
वरुणं पश्चिमे भागे त्वन्नो अग्न इत्यृचा ॥
वामदेव ऋषिस्त्रिष्टुब्वरुणो देवताऽस्य च ॥ ९२ ॥
प्राणरूपो हि जगतो वायुः कृष्णमृगासनः ॥
हेमदण्डधरः श्यामवर्णोऽसौ मोहिनीप्रियः ॥ ९३ ॥
तववायुवृत इति यजेद्वायुं मरुद्दिशि ॥
वायुश्च देवता त्वस्य गायत्री ऋषिरंगिराः ॥ ९४ ॥
अश्वारूढः कुन्तपाणिः कुबेरश्चित्रिणीप्रियः ॥
निधीश्वरः स्वर्णवर्णः स्वर्णदो रूपवान्प्रभुः ॥ ९५ ॥
सोमोधेनुमनेनैव उदीच्यां च धनेश्वरः ॥
त्रिष्टुप्छन्दो गौतमोऽस्य देवता सोमसंज्ञकः ॥ ९६ ॥
शुद्धस्फटिकसंकाशो गौरीशो वृषवाहनः ॥
वरदाभयशूलाक्षः शूलभृत्परमेश्वरः ॥ ९७ ॥
कद्रुद्रायेतिमंत्रेण ईशान्यां रुद्रमर्चयेत् ॥

गायत्री घोरकण्ठोऽस्य देवता चन्द्रशेखरः ॥ ९८ ॥
अर्कः पलाशखदिरापामार्गाश्वत्थसंभवाः ॥
उदुंबरशमीदूर्वाकुशजाः समिधाः क्रमात् ॥ ९९ ॥
आर्द्राश्च सत्त्वनिबिडाः स्निग्धाः प्रादेशसंमिताः ॥
कनिष्ठिकातुल्यवृत्ता होमकर्मणि कामदाः ॥ १०० ॥
लिखिताष्टदले पद्मे तस्मिन्कुण्डे हुताशनम् ॥
आचार्यः स्थापयेत्सम्यक् स्वगृह्योक्तविधानतः ॥ १०१ ॥
मुखान्ते चार्चयेत्साधिदेवताश्चाखिलग्रहान् ॥
पूर्वोक्तमन्त्रैः स्वैः स्वैश्च लोकपालान्समर्चयेत् ॥ १०२ ॥
तस्याश्चेशानभागे तु पूर्णकुंभं नवं न्यस्येत् ॥
पंचत्वक्पल्लवोपेतं शतौषधिसमन्वितम् ॥ १०३ ॥
स्वर्णरत्नफलोपेतं मृत्तिकावस्त्रसंयुतम् ॥
अग्लिंगैर्वारुणैर्मन्त्रैरर्चयेद्द्विजसंयुतम् ॥ १०४ ॥
उदुंबरवटाश्वत्थप्लक्षाम्राब्जजसंभवम् ॥
तिलमाषव्रीहियवा गोधूमाण्डप्रियङ्गवः ॥ १०५ ॥
गजाश्वगोकुलस्थानाद्रथ्यावल्मीकसंभवात् ॥
हृदाच्च नगरद्वारात्संभूताष्ट च मृत्तिकाः ॥ १०६ ॥
श्रीवृक्षबिल्वखदिरविष्णुक्रांतापुनर्नवाः ॥
देवदारुजटामांसीसहदेवीमुराशिवाः ॥ १०७ ॥
फलिनीनकुलाजातिर्लतामंजिष्टसंज्ञिकाः ॥
वटप्लक्षाम्रनीवारखदिरामल्लिकार्जुनाः ॥ १०८ ॥
दमयंतीमहाजातीनिम्बोशीरहरिद्रकाः ॥
सर्पाक्षीतुलसीरौद्रकुष्टदाडिमचंपकाः ॥ १०९ ॥
मातुलुङ्गजपात्वष्टाकर्णिकारोर्णकाञ्चनाः ॥
सेवतीपनसद्राक्षाविशाक्षीश्वेतसर्षपाः ॥ ११० ॥

राजीवकुंदमुकुलनीलोत्पलकरञ्जकाः ॥
पुन्नागचंदनद्रोणमंदरो हेमदुग्धकः ॥ १११ ॥
रक्तचंदनजंबीरयूथिकागृहमल्लिकाः ॥
सम्पर्कसिन्दुवारेंद्ररक्तधत्तूरखाण्डिमाः ॥ ११२ ॥
अपामार्गोरुपालाशबृहतीकरवीरकाः ॥
नन्द्यावर्तकुबेराक्षापाटलीहेमपुष्पिकाः ॥ ११३ ॥
शिरीषामलकाशोकरक्तागस्तिकपित्थकाः ॥
बंधूकभृंगराजाख्यकृष्णवीमाधवीलताः ॥ ११४ ॥
चतुर्जातो बर्हिशिखा कुटजो मधुबिंबकः ॥
तमालतरुपुष्पारुपुष्पाख्यश्चक्रमर्दिनी ॥ ११५ ॥
व्याकुली शाल्मली मोडीरास्नाखर्वपटोलिकाः ॥
महाखर्जूरिकानारिकेलाख्यास्ते शतद्रुमाः ॥ ११६ ॥
एषां मूलानि सर्वाणि नृणामेनो नुदंति यत् ॥
शांतिकर्माणि सर्वत्र निःक्षिपेत्कलशोदके ॥ ११७ ॥
एषामभावे तु दश सर्वौषध्यः प्रकीर्तिताः ॥
उद्धृतासीतिमन्त्रेण सदा तत्राष्टमृत्तिकाः ॥ ११८ ॥
चातुर्जातमुशीरं च पद्मकं फलिनीसुखम् ॥
देवदारुनिशा चैषां त्वक्पत्राणि च निक्षिपेत् ॥ ११९ ॥
उपचाराणि सर्वेषामपि शुक्लाक्षतैः सदा ॥
ग्रहवर्णाश्च दातव्या गंधपुष्पाक्षतध्वजाः ॥ १२० ॥
कर्पूरागरुकस्तूर्यः कुङ्कुमं गन्धगुग्गुलुः ॥
कृष्णागुर्वक्षकर्पूरा धूपाः स्युर्भास्करादितः ॥ १२१ ॥
उक्तसमिदभावे तु पालाशं तत्र कल्पयेत् ॥
गन्धाभावे शुक्लगन्धं पुष्पाभावे सुगन्धकम् ॥ १२२ ॥
धूपाभावे गुग्गुलुः स्याद्द्रव्याभावे गुडोदनम् ॥

पञ्चामृते गव्यमेव मिश्रकं न कदाचन ॥ १२३ ॥
घृतान्नपायसापूपक्षीरमिश्रं गुडोदनम् ॥
दधिमिश्रं तिलैर्मिश्रं सामिषं चित्रितोदनम् ॥ १२४ ॥
संस्कारार्थं चतुर्णां च होमार्थं स्थापयेच्च तान् ॥
अग्नेयजुष्टमंत्रेण उद्धृतेष्वभिपूरयेत् ॥ १२५ ॥
आदौ तु समिधाज्यान्नैः पृथगष्टोत्तरं शतम् ॥
स्वस्वमंत्रेश्च जुहुयाद्ग्रहोद्देशेन भक्तितः ॥ १२६ ॥
द्विज्ञाश्चैवाधिदैवत्याः पंचानां चैव पंचधा ॥
इन्द्रादिलोकपालानां न कुर्यात्समिधादि यत् ॥ १२७ ॥
हुनेदाज्याक्तसमिधश्चोपस्तरणपूर्वकम् ॥
अवदानं सकृत्कुर्यात्पश्चाच्चैवाभिधारणम् ॥ १२८ ॥
प्रमाणमाहुतेश्चात्र पक्वामलकसंमितम् ॥
चरुशेषं च नैवेद्यं विविधान्नं समर्पयेत् ॥ १२९ ॥
ततो व्याहृतिभिः कुर्यात्तिलहोमान्प्रयत्नतः ॥
प्रथमोऽयुतहोमश्च लक्षहोमो द्वितीयकः ॥ १३० ॥
तृतीयः कोटिहोमः स्यात्त्रिविधो ग्रहयज्ञकः ॥
एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा ॥ १३१ ॥
शिवगाथां विष्णुगाथां शांतिर्ब्राह्मणभोजनम् ॥
समाचरेत्प्रतिदिनमेवं भक्त्या समन्वितः ॥ १३२ ॥
ततो जपादीञ्जुहुयात्पूर्णाहुतिं समाचरेत् ॥
स्वस्तिकं कल्पयेत्पश्चात्कुण्डस्येशानभागतः ॥ १३३ ॥
यजमानाभिषेकार्थं तत्र भद्रासनं न्यसेत् ॥
प्राङ्मुखस्योपविष्टस्य यजमानस्य तत्र च ॥ १३४ ॥
अभिषेकं ततः कुर्युः साचार्याः षोडशर्त्विजः ॥
विविधैर्मङ्गलैर्घोषैः सूतमागधकैः सह ॥ १३५ ॥

वक्ष्यमाणैश्च मन्त्रैश्च अब्लिङ्गैर्वेदमन्त्रकैः ॥
कुम्भोदकैः पूर्णजलैरुक्तद्रव्यसमन्वितैः ॥ १३६ ॥
ग्रहाणामादिरादित्यो लोकरक्षणकारकः ॥
विषमस्थानसम्भूतां पीडां दहतु मे रविः ॥ १३७ ॥
रोहिणीशः सुधादीप्तः सुधागात्रः सुधाशनः ॥
विषमस्थानसम्भूतां पीडां दहतु मे विधुः ॥ १३८ ॥
भूमिपुत्रो महातेजा जगतां भयकृत्सदा ॥
वृष्टिकृद्वृष्टिहर्त्ता च पीडां दहतु मे कुजः ॥ १३९ ॥
उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ॥
सूर्यप्रियकरो विद्वान्पीडां दहतु मे बुधः ॥ १४० ॥
देवमन्त्री विशालाक्षः सदा लोकहिते रतः ॥
अनेकशिष्यसम्पूर्णः पीडां दहतु मे गुरुः ॥ १४१ ॥
दैत्यमंत्री गुरुस्तेषां प्राणदः स महाद्युतिः ॥
प्रभुस्ताराग्रहाणां च पीडां दहतु मे भृगुः ॥ १४२ ॥
सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ॥
मन्दचारः प्रसन्नात्मा पीडां दहतु मेऽर्कजः ॥ १४३ ॥
महाशिरो महावक्त्रो दीर्घदंष्ट्रो महाबलः ॥
अतनुश्चोर्ध्वकेशश्च पीडां दहतु मे तमः ॥ १४४ ॥
अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः ॥
उत्पातरूपो जगतः पीडां दहतु मे शिखी ॥ १४५ ॥
ततो राज्ञोऽभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत् ॥
दिग्विदिक्षु विचित्रान्नैर्दीपैर्नीराजयेत्ततः ॥ १४६ ॥
शुक्लमाल्यांबरधरः शुक्लगन्धानुलेपनः ॥
ततो मण्डलमागत्य ध्यायेदग्निं ग्रहान् सुरान् ॥ १४७ ॥
प्रत्येकं प्रतिमन्त्रैश्च दद्यात्पुष्पाञ्जलिं ततः ॥

मन्त्रतन्त्रक्रियालोपप्रायश्चित्तार्थमेव च ॥ १४८ ॥
यदस्य कर्मण इति स्विष्टकृज्जुहयात्ततः ॥
अस्य मन्त्रस्यातिधृतिः स्वर्णगर्भ ऋषिस्ततः ॥ १४९ ॥
देवताग्निः स्विष्टकृच्च व्याहृतेर्व्याहृतं ततः ॥
समिधादिद्रव्यमयमवदाय सकृत्सकृत् ॥ १५० ॥
मिलित्वा स्रुक्स्रुवं तत्र निक्षिपेदभिघार्य तत् ॥
मंत्रेण सप्त ते अग्नेरिति पूर्णाहुतिं यजेत् ॥ १५१ ॥
आचार्येभ्यो नवभ्यश्च ग्रहार्चनफलं ततः ॥
समिधाज्यचरूणां च तिलहोमफलं च यत् ॥ १५२ ॥
ब्रह्मत्वं कुम्भपूजायां चार्चनस्य फलं च यत् ॥
गणपक्षेत्रपालाश्च दुर्गाह्व्याङ्गदेवताः ॥ १५३ ॥
तासां जपफलं सम्यग्गृह्णीयाज्जलपूर्वकम् ॥
एवं षोडशऋत्विग्भ्यो दातव्या दक्षिणा ततः ॥ १५४ ॥
धेनुं शंखं रक्तवृषं हैमं पीतांबरं हयम् ॥
श्वेताश्वं कृष्णवर्णां गां कृष्णलोहमजं क्रमात् ॥ १५५ ॥
स्वर्णेन वा समीकृत्य दातव्या दक्षिणा ततः ॥
आचार्यार्थं जापकेभ्यो ब्राह्मणेभ्योऽथ शक्तितः ॥ १५६ ॥

तत्र दानमन्त्राः ।

गवामङ्गेषु तिष्ठंति भुवनानि चतुर्दश ॥
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ १५७ ॥
कपिले सर्वदेवानां पूजनीयासि रोहिणि ॥
तीर्थरूपमयी यस्मादतः शान्तिं प्रयच्छ मे ॥ १५८ ॥

इति गोदानकपिलादानमंत्रौ ।

पुण्यस्त्वं शंख पुण्यानां मंगलानां च मङ्गल ॥
विष्णुनाऽपि धृतो यस्मादतः शांतिं प्रयच्छ मे ॥ १५९ ॥

इति शंखदानमंत्रः ।

धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ॥
अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ १६० ॥
इति वृषभदानमंत्रः ।

हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ॥
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ १६१ ॥
इति स्वर्णदानमंत्रः ।

पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् ॥
प्रदानात्तस्य मे विष्णुरतः शान्तिं प्रयच्छ मे ॥ १६२ ॥
इति पीतवस्त्रदानम् ।

विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ॥
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥ १६३ ॥
इति अश्वदानमंत्रः ।

यस्मात्त्वं पृथिवी सर्वा धेनो कृष्णेन सन्निभा ॥
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ १६४ ॥
इति कृष्णधेनुदानमन्त्रः ।

यस्मादायस कर्माणि तवाधीनानि सर्वदा ॥
लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे ॥ १६५ ॥
इति आयसदानमन्त्रः ।

यस्माद्रत्नप्रदानेन स्वर्गभोगं लभेन्नरः ॥
तस्मादनेन दानेन स्वर्गभोगश्च मे भवेत् ॥ १६६ ॥
इति रत्नदानमंत्रः ।

सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ॥
अनंतफलदा यस्मादतः शान्तिं प्रयच्छ मे ॥ १६७ ॥
इति भूमिदानमन्त्रः ।

यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवास्थितः ॥
योनिर्विभावसोर्नित्यमतः शान्ति प्रयच्छ मे ॥ १६८ ॥
इति छागदानमन्त्रः ।

यस्मादशून्यं शयनं केशवस्य शिवस्य च ॥
तथा मे शयनं शश्वद्भवेज्जन्मनि जन्मनि ॥ १६९ ॥
इति शय्यादानमंत्रः ।

शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ॥
देहालङ्करणं वस्त्रमतः शान्ति प्रयच्छ मे ॥ १७० ॥
इति वस्त्रदानमंत्रः ।

अवशिष्टद्विजेभ्यश्च यावच्छक्त्या च दक्षिणाम् ॥
दीनान्धकृपणादिभ्यः किंचित्किंचित्प्रदापयेत् ॥ १७१ ॥
वन्दे सर्वरसश्रेष्ठ त्वामहं भगवन्नजः ॥
अत आज्य सुधारूप सर्वश्रेष्ठं कुरुष्व माम् ॥ १७२ ॥
इति आज्यपात्रपूजनमंत्रः ।

या लक्ष्मीर्यच्च मे दौस्थ्यं सर्वमात्रेष्ववस्थितम् ॥
तत्सर्वं शमयाज्य त्वं लक्ष्मीं पुष्टिं च वर्द्धय ॥ १७३ ॥
इत्याज्यावेक्षणमन्त्रः ।

उद्वासयेत्ततो वह्निं ग्रहान्देवान्द्विजान्पितॄन् ॥
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बन्धुभिः ॥ १७४ ॥
एवं यः कुरुते सम्यग्ग्रहयज्ञं सदैव सः ॥
सर्वान्कामानवाप्नोति स्वस्थानस्थफलं लभेत् ॥ १७५ ॥
इदं बलद्वयं चिंत्यं मासि मासि स्वजन्मतः ॥
अष्टवर्गबलं मुख्यमुभयोः सर्वकामिकम् ॥ १७६ ॥
यथा ग्रहाणां तीक्ष्णांशुः सदा तु सदृशो बली ॥
अष्टवर्गबलं तद्वद्ग्रहाणामुत्कटं बलम् ॥ १७७ ॥

अष्टवर्गबलं यत्र तत्रास्ति त्रिविधं बलम् ॥
तस्माद्बलत्रयाणां तत्साधयेदष्टवर्गजम् ॥ १७८ ॥
ग्रहेषु विषमस्थेषु यः शान्तिं न करोति सः ॥
अर्थहानिं मनस्तापं चाश्नुते सर्वसंकटान् ॥ १७९ ॥
इति ब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां गोचरविचाराध्यायोऽष्टादशः॥ १८॥

---

## अथ संक्रान्त्यध्यायः १९ ।

रविरविजभौमवारे संक्रांतौ दिनकरस्य यन्मासे ॥
पित्तकफानिलजामयनरपतिकलहस्त्ववृष्टिश्च ॥ १ ॥
बुधगुरुसितचन्द्राह्ने संक्रान्तावनामयं नृणाम् ॥
क्षितिपतिनिकरक्षेमं सस्यविवृद्धिं विधर्मिणां मरणम् ॥ २ ॥
घोरोग्रर्क्षे ध्वांक्षी लघुभे चरभे महोदरी मृदुभे ॥
मन्दाकिन्यचरर्क्षे मन्दा मिश्रा च राक्षसी तीक्ष्णे ॥ ३ ॥
शूद्रविट्चोरभूपद्विजगणपशुमुख्यसर्वजन्तूनाम् ॥
शुभफलदाः क्रमशस्ता नूनं संक्रांतयस्तेषाम् ॥ ४ ॥
नागचतुष्पदतैतिलकरणे सुप्तः करोति संक्रमणम् ॥
कौलवशकुनिकिंस्तुघ्ने करणे चोर्द्धस्थितो दिनकृत् ॥ ५ ॥
गरबवणिविष्ट्यां वणिजे सबालवे सततं च निविष्टः ॥
सततं जगतां वृष्टिर्धान्यार्घत्वं विशेषतः क्षेमम् ॥ ६ ॥
क्रमशस्त्वनिष्टमिष्टं मध्यमरूपं भवेदतुलम् ॥
नानाविधान्नरोगानप्येवं ज्ञातव्यमर्भकादीनाम् ॥ ७ ॥
पूर्वाह्ने नृपतिभयं मध्याह्ने हन्ति भूसुरानखिलान् ॥
अपराह्ने वैश्यगणं शूद्रानखिलान्हि चास्तमये ॥ ८ ॥
रात्रिचरान्निशिसमये सन्ध्यासमये पिशाचगणान् ॥
नटनर्त्तकानपरानिशि पशुपान्निखिलान्निहन्त्युषसि ॥ ९ ॥

केवलसंध्यासमये लिंगिव्रातं च निखिलसंन्यासीन् ॥
शुभफलदा संक्रान्तिरनुक्तकाले नृणां सततम् ॥ १० ॥
दिनपतिसंक्रमणात्प्राक् षोडशनाड्यः स पुण्यकालस्तु ॥
परतः षोडशनाड्यः सर्वत्र स्नानदानयोः पुण्याः ॥ ११ ॥
संक्रमणं यद्यहनि तदहः पुण्यं च पुण्यकार्येषु ॥
निश्यर्द्धात्प्राक्संक्रमणं पूर्वाह्नः स्नानदानयोः पुण्यम् ॥ १२ ॥
निश्यर्द्धात्संक्रांतिः पश्चाच्चेत्परदिनं पुण्यम् ॥
निशि समये साक्षाच्चेद्दिनद्वयं स्नानदानयोः पुण्यम् ॥ १३ ॥
स्थिरराशिषु विष्णुपदं षडशीतिमुखं यदुभयभे चैव ॥
मृगकर्कटसंक्रान्तौ ह्युदगयनं दक्षिणायनं चैव ॥ १४ ॥
अजघटसंक्रान्तिद्वयं विषुवत्प्रकीर्तितं नित्यम् ॥
द्वादशसंक्रांतीनां चतुष्टयं तद्विशिष्टतमम् ॥ १५ ॥
हरिपदयाम्यत्वयने पूर्वदिनं स्नानदानयोः पुण्यम् ॥
षडशीतिमुखे त्वयने सौम्ये पुण्यं च परदिनं निशि चेत् ॥
इति सञ्चिन्त्य विनिर्णयमादेष्टव्यं सदैव दैवज्ञैः ॥ १६ ॥
विषुवत्ययने ग्रहणे संक्रान्तौ पुण्यदिवसे वा ॥
पितृतृप्तिं यो न करोति दत्त्वा शापं व्रजंति तस्य सदा ॥ १७ ॥
आगतगतसमयेऽपि च करोति दानं जपं च होमाद्यम् ॥
ऊपरवापितबीजं यद्वत्तद्वच्च निष्फलं भवति ॥ १८ ॥
सुतजनने संक्रान्तौ उपरागे चन्द्रसूर्ययोर्नित्यम् ॥
रात्रावपि कर्त्तव्यं स्नानं दानं विशेषतो नृणाम् ॥ १९ ॥
अजकन्यावृषकर्किणि संक्रान्तौ यदि भवेद्वर्षम् ॥
अतुलं क्षेमसुभिक्षं नृपसज्जनगोकुले क्षेमम् ॥ २० ॥
घटचापसिंहमिथुनसंक्रान्तौ यदि भवेद्वर्षम् ॥
आमयडामरभूभुजयुद्धभयं त्ववृष्टिश्च ॥ २१ ॥

घटवृषवृश्चिकमकरे वृष्टिः स्यात्संक्रमणसमये ॥
विस्फोटामयतस्करपीडावृष्टिः कृशानुभयम् ॥ २२ ॥
हरिशार्दूलवराहगर्दभगजमहिषाश्च घोटकाश्चैव ॥
श्वाजवृषभकुक्कुटाः स्युः संक्रान्तेर्वाहनानि ववकरणात् ॥ २३ ॥
बाह्लीकखशवंगांगेषु तु विज्ञेयं वाहनं च ऋक्षभवम् ॥
करणभवं त्वन्यस्मिन्देशे नियतं च वाहनं ज्ञेयम् ॥ २४ ॥
क्रमशो बिभर्त्ति दिनपो ववतो भुशुण्डी गदाख्यं च ॥
खड्गाख्यं दण्डकार्मुकतोमरकुंतपाशाङ्कुशास्त्रशराः ॥ २५ ॥
विधोर्बलाबलैनैतत्संक्रमेण दिवाकरः ॥
ददाति तत्फलं नृणां तस्मिन्मासे तु गौणतः ॥ २६ ॥
हानिश्चेदर्कसंक्रान्तिर्जन्मपूर्वर्क्षतस्त्रिषु ॥
अर्थलाभं तथा षट्सु शेषेऽष्वेवमुपप्लवः ॥ २७ ॥
दशान्ति सूर्यमुक्तर्क्षान्निर्जीवाख्यं च भत्रयम् ॥
एकादशर्क्षं विंशर्क्षं मङ्गले निधनप्रदम् ॥ २८ ॥
शूलदोषापनुत्त्यर्थं निर्जीवस्यापनुत्तये ॥
स्वर्णशूलं द्विजे दद्यात्तिलवस्त्रसमन्वितम् ॥ २९ ॥
अर्कबिम्बचरान्नित्यं भचक्रं लभतेऽयनात् ॥
अस्तोदये तदयनमुच्चनीचोच्चवर्त्मनः ॥ ३० ॥
तदंशैर्न्यूनकालो हि वर्तमानस्य निर्गमः ॥
परराशिप्रवेशश्च राशीनामेवमेव हि ॥ ३१ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां संक्रान्त्यध्याय एकोनविंशः ॥ १९ ॥

---

## अथ चंद्रताराबलाध्यायः २० ।

प्रथमदिने वत्सरतः शुभदे चंद्रे च यस्य पुरुषस्य ॥
तद्वर्षे शिशिरकरः शुभफलदस्तस्य बुधयुक्तोऽपि ॥ १ ॥

अयनादौ ऋतुसमये मासेऽप्येवमेव विजानीयात् ॥
ताराबलमाप्तिस्तच्छुभतारा चेत्तथैव शुभदा स्यात् ॥ २ ॥
सितपक्षस्याद्यदिने शुभदस्तत्पक्षमतिशुभदः ॥
असितस्यादावशुभः शुभफलदः पक्षमखिलं तत् ॥ ३ ॥
जन्मत्रिकलत्ररिपुद्वितीयनवमायसुतदशमे ॥
सितपक्षे हिमकिरणः शुभदः कृष्णे त्रिपंचधननवमे ॥ ४ ॥
जन्मभमनुजन्मर्क्षं त्रिजन्मभं नेष्टमखिलकार्येषु ॥
सम्पत्तारा शुभदा विपदाख्या विपत्प्रदा तारा ॥ ५ ॥
क्षेमाख्या क्षेमकरी प्रतिकूला प्रत्यरिस्तारा ॥
साधनभं साधनदं नैधनभं नैधनं नृणाम् ॥ ६ ॥
मैत्रीकरणं मित्रभमतिमैत्रं परममैत्रर्क्षम् ॥
एवं विचार्य सततं बलाबलं दैववित्कथयेत् ॥ ७ ॥
सितपक्षे हिमकिरणो बलवान्कृष्णेऽपि बलवती तारा ॥
शशिबलवत्प्राधान्यं शुक्ले कृष्णे च तारकायाश्च ॥ ८ ॥
अमृतकिरणस्त्वमृतभवस्तद्बलमखिलं च तद्वत्स्यात् ॥
अमृतमयं तत्तस्मादभ्यधिकं त्वन्यखेटबलात् ॥ ९ ॥
तुहिनकरो जगतां यद्वत्तद्वच्च तद्बलं त्वखिलम् ॥
तन्महिमानं व्याचष्टे गुणरूपं निखिलजन्तूनाम् ॥ १० ॥
बला अखिलमृगाणां हरिरिव खचरबलानां च चन्द्रबलम् ॥
हिमकिरणे बलिनि सति सर्वे बलिनो वियच्चरा नित्यम् ॥ ११ ॥
अभ्यधिकं चन्द्रबलं त्वबलं ताराग्रहोद्भवं निखिलम् ॥
हिमकिरणबलार्द्धादपि नो तुल्यं ग्रहबलं सर्वम् ॥ १२ ॥

इति श्रीब्रह्मर्षिवसिष्ठविरचितायां संहितायां चंद्रताराबलाध्यायो विंशः ॥२०॥

---

# अथोपग्रहाध्यायः २१।

दिनकरभात्सप्तमभं भूकंपं पंचमर्क्षमतिविद्युत् ॥
शूलोपग्रहमष्टमभं दशमर्क्षं चाशनिं च विज्ञेयम् ॥ १ ॥
केतुरुपग्रहदोषस्त्वष्टादशमं च दंडसंज्ञश्च ॥
पंचदशं दशनवमं चोल्कापातं चतुर्दशं पातः ॥ २ ॥
मेघोपग्रहदोषो निर्घातकंपसंज्ञवज्रनिभः ॥
एकोत्तरविंशतिभादुक्ताः क्रमशो ह्युपग्रहा दोषाः ॥ ३ ॥
हिमकिरणे त्वेषु युते शुभकार्यं मृत्युदं नृणाम् ॥
उद्वाहादिषु सततं विचार्य लग्नं वदेद्धीमान् ॥ ४ ॥
रविभादहिपितृमित्रत्वाष्ट्रभहरिपौष्णभेषु गणितेषु ॥
अश्विनिभादिंदुयुते तावति वै पतति गणनया पातः ॥ ५ ॥
अयमपि पातो दोषश्चंडीशचण्डायुधाह्वयो ज्ञेयः ॥
अखिलेषु मंगलेष्वपि वर्ज्यो यस्माद्विनाशदः कर्तुः ॥ ६ ॥
दस्रेन्दुभुजगभास्करमित्रोत्तराषाढजलधिष्ण्येषु ॥
क्रमशो रविवारादिष्वानन्दाद्याः क्रमाद्योगाः ॥ ७ ॥
आनंदः कालदण्डो धूम्राख्योऽथ प्रजापतिः सौम्यः ॥
ध्वांक्षोऽथो ध्वजसंज्ञः श्रीवत्सो वज्रमुद्गरौ छत्रम् ॥ ८ ॥
मित्रं मानससंज्ञः पद्माख्यो लंबकस्तथोत्पातः ॥
मृत्युः काणः सिद्धिः शुभामृतौ मुशलमथ गदाख्यश्च ॥ ९ ॥
मातङ्गराक्षसाह्वयचरस्थिरप्रवर्द्धमानसंज्ञाः स्युः ॥
अष्टाविंशतिसंख्या निजनिजसंज्ञासदृशफलदाः स्युः ॥ १० ॥

इति श्रीमहर्षिवृद्धवसिष्ठविरचितायां संहितायामुपग्रहाध्याय एकविंशः॥ २१ ॥

## अथ ग्रहकूटाध्यायः २२ ।

ग्रहकूटभतो यस्माच्छुभाशुभं भवति जंतूनाम् ॥
तद्ग्रहकूटविधानं नूनं सम्यक्समासतो वक्ष्ये ॥ १ ॥
स्फुटमानीय खगेन्द्रं लिप्तीकृत्वा खखाष्टभिर्भक्तम् ॥
गतधिष्ण्यानि च लब्धमवशिष्टं वर्त्तमानकं ज्ञेयम् ॥ २ ॥
षष्टिहतं गतगम्यं भुक्तिहृतं नाडिकादितो ज्ञेयम् ॥
खचराधिष्ठितधिष्ण्यं ज्ञात्वा सर्वं विचिंतयेत्पश्चात् ॥ ३ ॥
यस्य नरस्य हि जन्मनि धिष्ण्ये क्रूरैर्निपीडिते खचरैः ॥
अतिदुःखामयशोकं भयं प्रवासः शत्रोर्भयं भवति ॥ ४ ॥
यस्मिन्धिष्ण्ये विपदि प्रत्यरिभे स्थाननाशनं भवति ॥
निधनं नैधनधिष्ण्ये बन्धनमथवा स्थितेऽपाये ॥ ५ ॥
शुभखचरेषु स्थितेषु नक्षत्रेषु स्वल्पहानिः स्यात् ॥
मध्यमफलदाः सौम्याः पापाश्चानुक्तभेषु भीतिकराः ॥ ६ ॥
यस्मिन्धिष्ण्ये यः प्रभवति तदेव तज्जन्मभं विजानीयात् ॥
दशमर्क्षं कर्माख्यं संघाताख्यं च शोडशं धिष्ण्यम् ॥ ७ ॥
समुदायं द्विनवमभं यद्वैनाशं त्रयोविंशम् ॥
पञ्चोत्तरविंशञ्च मानससंज्ञं महादुष्टम् ॥ ८ ॥
षड्भानि च शुभकर्माणि तानि विनाशदानि जन्तूनाम् ॥
राज्ञां विशेषभानि तु देशोद्भवजानि पट्टबन्धानि ॥ ९ ॥
नवधिष्ण्यानि नृपाणां विनाशनदान्येव सर्वकार्येषु ॥
अत एवाखिलविषये नूनं वर्ज्यानि सर्वदात्यर्थम् ॥ १० ॥
कृतमखिलं जन्मनि भे विनाशमायाति तत्कार्यम् ॥
कर्मणि कर्मविनाशं संघातर्क्षे शरीरनाशः स्यात् ॥ ११ ॥
रोगभयं समुदाये वैनाशिकभेऽपि नाशः स्यात् ॥
हृदयभं मानसभे देशजभे राजपीडा स्यात् ॥ १२ ॥

जात्यर्क्षे जातिभयमभिषेकर्क्षे च राजनाशः स्यात् ॥
क्रूराम्बरचरनिहतेष्वेषु च भेषु प्रभूतपीडा स्यात् ॥ १३ ॥
ग्रहयज्ञैरभिषेकैर्होमैर्दानैः प्रयाति शमनं वै ॥
जन्मनि धिष्ण्ये यस्य ग्रहणोत्पाता भवंति तस्यैवम् ॥ १४ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां ग्रहकूटाध्यायो द्वाविंशः॥२२॥

---

## अथ लग्नबलाध्यायः २३ ।

अभिषेको नृपतीनां साहसकर्मादि वैरोधम् ॥
आकरधातुवादाद्यखिलं मेषोदये कार्यम् ॥ १ ॥
स्थिरचरकार्यं त्वखिलं विवाहवास्त्वादिकन्यकावरणम् ॥
क्षेत्रारंभणमखिलं भूषणशिल्पादिकारकं वृषभे ॥ २ ॥
मेषवृषोक्तं कर्म गजतुरगोष्ट्रादिकं च गोकर्म ॥
अविकलमहिपमेपक्षितिपतिसेवादिकं मिथुने ॥ ३ ॥
शांतिकपौष्टिकमांगलजलबंधनमोक्षमखिलजलकर्म ॥
दैविककूपतडागशिल्पोद्वाहादि कर्कटे कार्यम् ॥ ४ ॥
परयोगो नृपसेवा कृषिकर्मवणिङ्महाहवाद्यखिलम् ॥
स्थिरकर्माखिलवास्तुनि वेश्मशिल्पादि सिंहभे कार्यम् ॥ ५ ॥
भूषणमङ्गलकार्यमौषधविज्ञानपुण्यशिल्पादि ॥
उद्वाहशान्तिपौष्टिकगजतुरगोष्ट्रादि कन्यायाम् ॥ ६ ॥
कन्योक्ताखिलकार्यं तुलादिमानानि भाण्डकर्माणि ॥
यात्रावास्तुविधानं तौलिनि कृषिकर्म वाणिज्यम् ॥ ७ ॥
साहसदारुणचित्रकलेखकवास्तूग्रशास्त्रकर्माद्यम् ॥
आहवकृषिवाणिज्यं क्षितिपतिवादश्च वृश्चिके कार्यम् ॥ ८ ॥
शांतिकपौष्टिकशिल्पिकसन्धानाश्वादिनृत्यगीताद्यम् ॥
राजोपकरणमखिलं भूषणवास्त्वादि चापभे सेवा ॥ ९ ॥

शंबरमोचनबंधनभूषणरत्नादि शिल्पधान्यादि ॥
क्रयविक्रयमखिलं यद्रिपुहननोद्योगमाहवं मकरे ॥ १० ॥
युद्धोपकरणभूषणजलधान्यशिल्पाश्च गोधनाद्यं यत् ॥
पण्यासवपुरनगरप्रवेशनं कर्म घटे लग्ने ॥ ११ ॥
यज्जलबन्धनमोचनजलयात्रारत्नभूषणं कर्म ॥
रथतुरगेभपशूनां कार्यं मीनोदये शिल्पम् ॥ १२ ॥
पापयुतेक्षितरहिता मेषाद्याश्चोक्तफलदाः स्युः ॥
नो चेदुक्तफलं वै दातुं शक्ता भवंति न कदाचित् ॥ १३ ॥
सम्पूर्णफलदमादौ विलग्नमध्येऽथ मध्यफलम् ॥
अन्ते तु तुच्छफलं सर्वत्रैवं विचिन्तयेद्धीमान् ॥ १४ ॥
त्रिंशद्भागं लग्नमितं तदर्द्धतुलिता तु होराख्या ॥
लग्नतृतीयो भागो द्रेष्काणः स्यान्नवांशको नवमः ॥ १५ ॥
द्वादशभागो द्वादशमस्त्रिंशत्तमस्त्रिंशदंशः स्यात् ॥
षड्गो भवति सदा शुभखचरसमुद्भवाः शुभदाः ॥ १६ ॥
पापसमुत्थस्त्वशुभस्तस्माद्ग्राह्यस्तु सौम्यषड्वर्गः ॥
शुभकर्मणि सततं संत्याज्यः पापाह्वयो वर्गः ॥ १७ ॥
चापनृयुग्घटवृषभा कर्कटकन्यान्त्यराशयः शुभदाः ॥
शुभभवनत्वादन्ये त्वशुभग्रहत्वादशोभनाः पंच ॥ १८ ॥
स्थिरराशौ शुभवर्गे नैधनशुद्धे चतुष्टये सौम्ये ॥
द्विपदगृहे लग्नगते वास्तुनिवेशः शुभो न भोगचरे ॥ १९ ॥
शुभखचरा घटराशिं विसृज्य धनलाभलग्नकर्मस्थाः ॥
अव्ययगास्त्वशुभखगा विपणिं यदि सेन्दुभार्गवे योगे ॥ २० ॥
धर्मात्मजनैधनभे चरवर्गे त्वर्थसंग्रहः कार्यः ॥
बुधे लग्नदशमगते भौमे चौर्यस्य मुख्यकालः स्यात् ॥ २१ ॥
शुभलग्ने दशमभवे रवौ कुजे वाऽथ तद्वर्गे ॥

आयुधविद्या कार्या नृपसेवा वैरिनिग्रहः कार्यः ॥ २२ ॥
शुभखचरे लग्नगते शुभवर्गे चाथ नैधने शुद्धे ॥
पशुसंग्रहणं कार्यं रक्षावृद्धिर्विशेषतस्तेषाम् ॥ २३ ॥
बलवति दितिजगुरौ वा शुक्रे वा दुर्बलेष्वकथितेषु ॥
पुंजन्मकथितलग्ने पुत्रार्थी कामयेत्प्रियां पत्नीम् ॥ २४ ॥
सुरसचिवे शुक्रे वा धर्मात्मजलग्नगे बलिनि ॥
पुंजन्मकथितयोगे समुपेयात्प्रेयसीं मुदितः ॥ २५ ॥
बलयुक्तैः शुभखचरैरन्यैः स्थिरोदये ग्राम्ये ॥
अष्टमशुद्धियुतेऽस्मिन्नवसद्मप्रवेशनं कार्यम् ॥ २६ ॥
सुरगुरुहिबुके लग्ने भानौ वारे च सुकृतवृद्धिः स्यात् ॥
गुरुलग्नेऽर्के दशमे कर्तव्यं त्वभिचारमखिलं हि ॥ २७ ॥
उदगयने पूर्णेन्दौ जीवे वा भास्करे च दशमगते ॥
अभिषेकं नृपतीनामुत्सवकार्याणि सितदिवसे ॥ २८ ॥
हिमकिरणे लग्नगते जीवे केन्द्रे च चंद्रसितवारे ॥
रससंग्रहणं कार्यं सस्यारामादिनिखिलजलकर्म ॥ २९ ॥
लग्नगते सुरसचिवे दशमस्थैः क्रूरखेचरैरबलैः ॥
प्रव्रज्याह्वययोगे ज्ञानग्रहणं मुमुक्षुभिः कार्यम् ॥ ३० ॥
बुधराशिगते चन्द्रे शुभखचरे शुभे वर्गे ॥
ज्ञानग्रहणं कार्यं हित्वा पापग्रहोदयं च तद्वर्गम् ॥ ३१ ॥
शुभकार्याण्यखिलानि तु त्रिकोणकेन्द्रस्थितेषु सौम्येषु ॥
व्ययनैधनरिपुलग्नैरसंयुते यत्र तुहिनकरे ॥ ३२ ॥
शशितनये जीवे वा चन्द्रे वा लग्नगे बलिनि धर्मे वा॥ ।
तद्वर्गे लग्नगते शिल्पारंभः प्रशस्यते सततम् ॥ ३३ ॥
उदगयने शशितनये गुरुवीक्षिते शीतगौ ज्ञराशिस्थे ॥

---

१ पद्वर्गम् इति पाठः ।

हिबुकस्थैः शुभखचरैर्नास्त्यारम्भः प्रशस्यते नूनम् ॥ ३४ ॥
लग्नगते तुहिनकरे त्रिकोणकेन्द्रस्थितैः शुभदैः ॥
सततं घटभं हित्वा पण्यं कर्म लाभदं भवति ॥ ३५ ॥
निधनारिव्ययमन्मथभवने शुद्धे शुभेषु बलवत्सु ॥
वरसिद्धामृतयोगे त्वौषधसेवा सुवीर्यदा तत्र ॥ ३६ ॥
सुरगुरुमैत्रभभाग्ये द्वादश्यां वा पक्षमध्यतिथौ ॥
सितयुतवीक्षितलग्ने तैतिलकरणे च सन्धिः स्यात् ॥ ३७ ॥
शशिनैर्ऋतयमपितृभेष्वष्टमशुद्धे भृगौ च पाताले ॥
घटलग्नगते शशिजे निखिलवेतालकर्मसिद्धिः स्यात् ॥ ३८ ॥
अशुभयुतेंदावशुभग्रहवर्गगते बुधे बलिनि ॥
रिपुनैधनलग्नगृहे विष्टौ योगेषु चाभिचारः स्यात् ॥ ३९ ॥
उपचयभे लग्नगते व्ययनैधनशुद्धिसंयुते लग्ने ॥
उपचयगे शीतकरे मंगलकर्माणि कार्याणि ॥ ४० ॥
शक्तियुते भृगुतनये चंद्रे वाऽसितार्कधरणिसुतैः ॥
बलहीने हिमकिरणे लाभे जीवे कृपिक्रिया लग्ने ॥ ४१ ॥
भवरिपुसहजैः पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः ॥
कथितेषु च धिष्ण्येष्वपि शुभलग्ने बीजवापनं कार्यम् ॥ ४२ ॥
शय्यासनयुवतिजनशस्त्राभरणानुलेपनं निखिलम् ॥
सितवासरवर्गेष्वपि कर्तव्यं शशिजीवयोर्वापि ॥ ४३ ॥
महिषखरकरभाणां दासकर्मादि सूर्यसुतलग्ने ॥
शुभकार्यं शुभलग्ने त्वशुभं सर्वं त्वशुभलग्ने च ॥ ४४ ॥
निधनव्ययगाः सौम्याः प्रायो न शुभप्रदास्त्वितरे ॥
तत्र च केन्द्रेष्वशुभो लग्ने चन्द्रः शुभान्वितो निधनः ॥ ४५ ॥
शशिबलमादौ कल्प्यं पश्चादितरग्रहबलं कर्तुः ॥
बलयुक्ते हिमकिरणे बलिनो भवन्ति निखिलखगाः ॥ ४६ ॥

हिमकिरणबलमाधारं त्वाधेयं त्वन्यखेटजं वीर्यम् ॥
आधारस्थान्यखिलान्याधेयान्येव जृंभंते ॥ ४७ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां सर्वलग्नबलाध्याय-
स्त्रयोविंशः ॥ २३ ॥

---

## अथाऽऽधानाध्यायः २४ ।

सोमात्मिकाः स्त्रियः सर्वाः पुरुषा भास्करात्मकाः ॥
तस्माच्चन्द्रवशात्तासां तेषां सर्वं हि सूर्यतः ॥ १ ॥
अर्कान्मुक्तः शशी यद्वद्द्वादशांशादुदेष्यति ॥
रजोदर्शनमप्यासां द्वादशांशेश्च जन्मतः ॥ २ ॥
अत ऊर्ध्वं प्रतिमासं भवति रजो भौमयोगतस्तासाम् ॥
अनुपचयस्थे चन्द्रे धरणिसुतवीक्षणाद्वापि ॥ ३ ॥
प्रथमरजोदर्शनतः शुभाशुभं भवति सर्ववनितानाम् ॥
तस्मात्प्रतिधिष्ण्यफलं वक्ष्ये दस्रादितः क्रमशः ॥ ४ ॥
बहुसुतधनसंपच्छीलसौभाग्ययुक्ता ।
विगतनिखिलदोषा दस्रभे पुष्पिणी या ॥
सुरगुरुपतिभक्ता मानिनी गीतनृत्य- ।
प्रवरकुसुमवस्त्रैर्भूषणैर्भूषिता स्यात् ॥ ५ ॥
परपुरुषपरा स्याद्दुर्भगा याम्यधिष्ण्ये ।
विविधचपलभाषा भूषणासक्तवार्ता ॥
नियतमनतवाक्यत्रस्तविद्वेषिणी सा ।
कुलजनगुणहीना छन्नपापा खला स्यात् ॥ ६ ॥
वैश्वानरर्क्षे बहुमित्रपुत्रधनान्विता सत्यपरा गुणाढ्या ॥
विकीर्णकामा प्रियवादिनी च नारी सहोत्थप्रवरा कलाज्ञा ॥ ७ ॥
पितामहर्क्षे सुगुणा सुवृत्ता पतिप्रिया सत्यवती धनाढ्या ॥

बन्धुप्रिया मानरता सुरूपा प्रहृष्टचित्ता प्रविकीर्णकामा ॥ ८ ॥
सदा मृगे भाग्यवती सुवृत्ता कलानुरक्ता विपुलार्थयुक्ता ॥
पतिप्रिया मानवती बहुज्ञा प्रजावती बन्धुजनैः सुमान्या ॥ ९ ॥
महेशभे पुष्पवती विशाला मूर्खानुरक्ता परकार्यसक्ता ॥
पत्युज्झिता प्रेष्यवती विनिःस्वा परप्रिया दुःखवती विपुत्रा ॥ १० ॥
मायाविनी कार्पटिका विशालाऽदित्याख्यधिष्ण्ये कुचरित्रयुक्ता ॥
वंध्या पुनर्भूः परसङ्गसक्ता दुश्चेष्टिता पुष्पवती कलाढ्या ॥ ११ ॥
सुगन्धपुष्पाम्बरभूषणेषु सदा कलागीतनिबद्धचित्ता ॥
पुष्ये त्वगम्यागमना गतार्ता प्रजावती दुःप्रतिभान्विता सा ॥ १२ ॥
खला पुनर्भूर्बहुदोषसक्ता भौजंगभे पुष्पवती विशीला ॥
मायापटुर्लम्पटिकार्थहीना स्वच्छन्दगा व्याधिकरी कलाज्ञा ॥ १३ ॥
पतिप्रिया पुष्पवती मघायां प्रजावती सा कुलटा तथापि ॥
सिंहीव योषिद्वरवृंदमध्ये प्रभाति खद्योतवदंबरेऽपि ॥ १४ ॥
भाग्ये भाग्यवती बहुव्ययपरा पानप्रसक्ता वृता ।
सत्स्वीर्ष्या कुलटा कलासु निपुणा नीरुक्च भग्नव्रता ॥
दुःपुत्रा कुलपांसिनी खलरजा भग्नोद्यमा पांशुला ।
दुःखा पापरता विधर्मनिरता पण्डप्रिया संततम् ॥ १५ ॥
कुलद्वयानंदकरी विभक्तकार्या कलाढ्या विनिगूह्यचित्ता ॥
विकीर्णकामा रुचिरा सुवृत्ता श्लक्ष्णार्यमर्क्षे विगताऽरिवैरा ॥ १६ ॥
संभोगशीला परकार्यकारिणी बन्ध्वर्चिता श्रेष्ठगुणानुरक्ता ॥
गताभ्यसूया विगतारिवर्गा हस्तेंऽगना पुष्पवती विलोला ॥ १७ ॥
त्वाष्ट्रे प्रियालुः सुरतप्रियोद्यद्वैरा निगूह्यात्महिते नियुक्ता ॥
निवृत्तवैरामयपीडितांगी संगीतविद्यानिपुणा कलासु ॥ १८ ॥
दृढव्रता सत्यपरा सुवृत्ता निवृत्तरागा पररन्ध्रगोप्त्री ॥

१ मूर्खानुरक्ता इति पाठः ।

गजाभिगामिन्यनिलाह्वयर्क्षे प्रमोदिनी मंगलकार्यवृंदे ॥ १९ ॥
द्विदैवभे पुष्पवती प्रवृत्ता विचित्तमोघामपवैरिसंघा ॥
विवादशीला विपुलप्रतापा संभोगमाप्नोति शुनीव शश्वत् ॥ २० ॥
मैत्रे विमित्रा सगदांगहीना विवादशीला विगुणा सवैरा ॥
प्रवृत्तरागा प्रविकीर्णकामा स्वगर्भसंस्रावपरा विरक्ता ॥ २१ ॥
पौरन्दरे पुष्पवती विमर्पा विनिंदिताऽतिव्यसनी सुगूढा ॥
परंतपा प्रव्रजिते रतात्मा परप्रजासूयवती सपापा ॥ २२ ॥
मूले प्रकामाऽधिकसत्वहीना व्यसुर्बुभुक्षोद्धतदोपचित्ता ॥
निरंतरं दूपितकर्मवृत्ता प्रजावती गोगजगामिनी च ॥ २३ ॥
पानीयभे पुष्पवती विवादशीला कलाकर्मणि दुष्टचित्ता ॥
परानुरक्ता वनशैलसक्ता प्रच्छन्नपापाऽद्भुतकर्मरक्ता ॥ २४ ॥
वैश्वे सती पुष्पवती सुवृत्ता महागुणैरुन्नतिमातनोति ॥
चित्तानुरक्ता स्वपतेरुदारा युक्ता विवैरा विनिवृत्तदोषा ॥ २५ ॥

बहुसुतधनधान्यप्रोल्लसद्रूपणाढ्या ।
प्रचुरगुणगणाद्यैर्भर्तुरानन्ददा स्यात् ॥
युवतिजनमता सा विष्णुधिष्ण्ये विचित्रा ।
प्रवरनटनगीतातोद्यवाद्ये ह्यभिज्ञा ॥ २६ ॥
अतिवसुधनभाक्स्यान्मानिनी सच्चरित्रा ।
विगतभयकुवृत्ता सन्नतांगी गुणाढ्या ॥
पतिहितनिरता स्याद्बन्धुवर्गैः प्रपूज्या ।
प्रियहितकरकर्मण्युत्सुका प्रोष्ठपद्याम् ॥ २७ ॥
निखिलवरकलाढ्या नृत्यगीतानुरक्ता ।
विविधगुणगणाढ्या मानिनी भाग्ययुक्ता ॥
विविधपरिवरौघैः संवियुक्ता शतर्क्षे ।
पतिकुलजनमान्या पुष्पवत्यंगना सा ॥ २८ ॥

शुभगुणगणहीना कर्कशा भाग्यहीना ।
त्वनृतपरुषमन्त्रैर्दुर्जनान्तर्जयंती ॥
विचरति गुणमध्ये दुर्भगा वाजपादे ।
जनकसदनवासा नष्टकामाऽघरूपा ॥ २९ ॥
गुणसुतसुखसंपद्भूपितांगी त्वभिज्ञा ।
अभिभवति सपत्नान्सज्जनान्मानयन्ती ॥
मृदुमधुरसुवाचा गीतनृत्योद्यता सा ।
प्रवरबहुकलाज्ञा चोत्तराभाद्रपादे ॥ ३० ॥
पौष्णे विशीला बहुदुःखशोका विवादशीला पितृवेश्मसंस्था ॥
पराभितप्ता पतिपुत्रदूरा नीचे रता कापटिका च कन्या ॥ ३१ ॥
रिक्तासु पर्वस्वथ कार्तिकेयहर्योः क्षयाहे व्यतिपातविष्ट्याम् ॥
एकार्गले पारिघवेधृतेषु चोत्पातसन्ध्यासु रजोऽप्यनिष्टम् ॥ ३२ ॥
सदा गदार्त्ता सुपतिव्रता सा वंध्या प्रजावत्यतुलार्थयुक्ता ॥
आनन्दकर्त्री त्वसती च पुष्पवती क्रमाद्भास्करवासरेषु ॥ ३३ ॥
आरोग्यसौभाग्यवती च सौम्यवर्गेषु सा पुष्पवती च कन्या ॥
दुःखा तथानर्थविवादशीला वर्गेषु सौम्येषु च दुर्मतिः स्यात् ॥ ३४ ॥
नक्षत्रवारतिथियोगदिनार्द्धकाल ।
षड्वर्गसंकथितमिष्टमनिष्टमेतत् ॥
ज्ञात्वाल्पदोषमथ भूरि गुणं च पश्चाद् ।
वृद्धान् गुणोत्तमपरं शुभकर्म कार्यम् ॥ ३५ ॥
प्रभूतदोषं यदि दृश्यते तत्पुष्पं तदा शान्तिककर्म कार्यम् ॥
विवर्जयेदेव तदेकशय्यां यावद्रजोदर्शनामिष्टमत्रे ॥ ३६ ॥
चाण्डाली पतितासमाथ रजकी शूद्रा दिनादिक्रमात् ।
शुद्धा पुष्पवती च पंचमदिने हव्येषु कव्येषु च ॥
चेद्दृष्टेऽह्नि नवोदकुंभसलिलैः सन्मंत्रितैरोपधैः ।

स्नानं पापनुदं सपंचकलशैः कार्यं समृद्धिर्जलैः ॥ ३७ ॥
ऐशान्यतो गोमयमण्डले च परिस्तृतेऽग्नौ जुहुयाच्च दुर्गाम् ॥
युग्मां घृताक्तां च समित्प्रमाणां गायत्रिसंज्ञाष्टसहस्रसंख्याम् ॥ ३८ ॥
शतप्रमाणामथवाऽप्यहंत्री शुभैर्यवैर्व्याहृतिभिस्तिलैश्च ॥
ततः सुरान्भूमिसुरान्पितॄंश्च सन्तर्पयेदन्नसुवर्णवस्त्रैः ॥ ३९ ॥
पौष्णद्वये पैतृभयाम्यसार्थविष्णुद्वये नैधनजन्मभेषु ॥
उत्पातपातग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने ॥ ४० ॥
उपप्लवे वैधृतिपातयोश्च विष्ट्यां दिवा पारिघपूर्वभागे ॥
संध्यासु पर्वस्वपि मातृपित्रोर्मृतेऽह्नि पत्नीगमनं विवर्ज्यम् ॥ ४१ ॥
दिनेषु युग्मेषु च वक्ष्यमाणयोगैः सुतार्थी स्वसतीमुपेयात् ॥
दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा च गण्डांस्तिथिलग्नभानाम् ॥ ४२ ॥
आधानलग्ने विषमांशराशौ जीवेंदुजाभ्यां युतवीक्षिते वा ॥
नान्यैः सुपुत्रस्त्वथ पापखेटैः पापी च मिश्रैर्बलिभिर्विमिश्रः ॥ ४३ ॥
युग्मांशलग्ने बलयुक्तशुक्रनिशाकराभ्यां युतवीक्षिते वा ॥
नान्यैः सुकन्या त्वथ पापरूपा पापैस्त्वशेषं तु विचिंत्य वाच्यम् ॥ ४४ ॥
ओजर्क्षांशे लग्नगे वीर्ययुक्ते जीवेन्द्वर्कैरोजराश्यंशकस्थैः ॥
पुंजन्म स्याद्व्यत्यये कन्यका स्यान्मिश्रैः पण्ढो द्व्यंगगैर्द्विर्त्रिजन्म ४५ ॥
ओजांशकर्क्षाद्विषमर्क्षसंस्थः पुंजन्मकारी रविसूनुरेकः ॥
विचार्य्य वीर्यं पुरुषग्रहाणां वाच्योऽथ पुत्रस्त्वथ पुत्रिका वा ॥ ४६ ॥
चन्द्रार्कपुत्रक्षितिजैः स्ववर्गैर्बृहस्पतौ धर्मविलग्नपुत्रगे ॥
योगेष्वपत्यं भवतीह निश्चयादमी च योगा विफला विबीजिनाम् ॥ ४७ ॥
न च दशमनिशाविवर्जनं प्रकुर्यादृतुसमये पुरुषः स्त्रियः कदाचित् ॥
ऋतुरपि दशपञ्चवासराणि प्रथमनिशात्रितयं न तत्र गम्यम् ॥ ४८ ॥
इति श्रीब्रह्मर्षिवृद्धवासिष्ठविरचितायां संहितायामाधानाध्यायश्चतुर्विंशः ॥ २४ ॥

---

१ पापग्रहदूषितेषु इति पाठः ।

## अथ पुंसवनसीमन्ताध्यायः २५।

कुर्यात्पुंसवनं प्रसिद्धविपये गर्भे तृतीयेथवा।
मासि स्फीततनौ तुषारकिरणे पुष्पेऽथ वा वैष्णवे॥
हित्वा कर्कटकं नृयुग्ममबलामन्येऽप्योरिक्ते तिथौ।
शुद्धे नैधनधाम्नि शुक्रशशभृद्भिर्मंत्रिणां वासरे॥ १॥
पुंनाम्नि श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः॥
मूलं प्रोष्ठपदं चानुराधा मृगशिरोऽश्विनी॥ २॥
चन्द्रे लग्नेऽतिसंपत्स्याच्छुभवीक्षितसंयुते॥
सीमंतस्यापि संपत्स्यादिष्टः पुंसवनस्य यः॥ ३॥
कृतसवनसतीनामाद्यगर्भे प्रसक्ते।
विहितमथ चतुर्थे मासि षष्ठाष्टमे वा॥
उडुनि शशिनि वीर्ये मासपे वीर्ययुक्ते।
बहुगुणयुतपक्षेऽप्येव सीमन्त कर्म॥४॥
मासे मासे मासपादिग्रहाणां शांतिं कुर्याच्छांतिवाक्यैर्जपैश्च॥
होमैर्दानैः सज्जनानां च वाक्यैर्गर्भं सम्यग्रक्षयेत्पुत्रकामी॥ ५॥
ऋक्षेषु साधारणदारुणोग्रवर्ज्येषु सूर्येज्यमहीसुतानाम्॥
वारेष्वरिक्ताक्षयपंचपर्वदिनेषु पुंलग्ननवांशकेषु॥ ६॥
न नैधने नैधनशुद्धलग्ने शुभग्रहैर्युक्तनिरीक्षिते वा॥
इष्टैः सदा पंचभिरर्कचंद्रसुरेज्यपूर्वैरथवा चतुर्भिः॥७॥
केन्द्रत्रिकोणत्रिधनायसौम्यैर्दुश्चिक्यलाभारिगतैश्च पापैः॥
षडष्टलग्नांत्यविवर्जितेन्दौ सीमंतकार्यं शुभदं सदैव॥ ८॥
व्ययेऽष्टमे वा सुतभे विलग्ने चेकोऽपि पापोऽथ नभश्चराणाम्॥
सीमंतिनीनाशकरस्त्ववश्यं करोति गर्भस्य च वा विनाशम्॥ ९॥
सिताऽऽवनेयामरपूज्यसूर्यचन्द्रार्किसूर्योदयपेंदुसूर्याः॥
मासाधिपाः स्युः क्रमशो दशैते निपीडितो नाशयति स्वमासि॥१०॥

रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ वा ॥
मध्याह्ने वा पूर्वभागेऽनुकूले विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥ ११ ॥
पीताम्बरं कृष्णवर्णं शंखचक्रगदांबुजम् ॥
वैकुण्ठवासिनं विष्णुं मृत्कुंभे विन्यसेत्ततः ॥ १२ ॥
विष्णोः स्वरूपं कनकेन कृत्वा तल्लिंगमंत्रैरथ गन्धपुष्पैः ॥
वस्त्राक्षतैर्गुग्गुलगन्धदीपैर्नैवेद्यतांबूलफलैश्च सम्यक् ॥ १३ ॥
विष्णुं च देवतापूज्यं गर्भाणां रक्षणाय च ॥
ब्राह्मणेभ्यः प्रदातव्या प्रतिमा वस्त्रसंयुता ॥ १४ ॥
चैत्रादिमासनामानि वैकुंठोऽथ जनार्दनः ॥
उपेन्द्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः ॥ १५ ॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ॥
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥ १६ ॥
तद्व्यक्षरं वा चतुरक्षरं वा विवर्जयेच्चांत्यलकाररेफम् ॥
तन्मासनामादिकमेव चिन्त्यं स्फुटं वदेद्दक्षिणकर्णरन्ध्रे ॥ १७ ॥
इति श्रीब्रह्मर्षिवृद्धव० वि० संहितायां पुंसवनसीमन्ताध्यायः पञ्चविंशः ॥२५॥

## अथ जातकर्मनामकर्माध्यायः २६ ।

यस्मिन्मुहूर्ते जनितः कुमारस्तस्मिन्विधेयं खलु जातकर्म ॥
विनिर्गतेवाऽप्यथ सूतकेऽपि तस्मिन्दिने तस्य च नामधेयम् ॥ १ ॥
संतर्प्य देवान्सपितॄन्द्विजांश्च सुवर्णगोभूतिलधान्यवस्त्रैः ॥
गुडाज्यरौप्यैर्लवणैश्च होमे रक्षोघ्नमंत्रैः सह जातकर्म ॥ २ ॥
अतीतकार्य्याण्यखिलानि तानि कार्याणि सौम्यायनगे दिनेशे ॥
सिते गुरौ वाप्यथ दृश्यमाने तदुक्तपञ्चाङ्गदिनेऽप्यखण्डम् ॥ ३ ॥
मैत्रध्रुवक्षिप्रचरेषु भेषु चारिक्तपर्वाख्यदिनेषु कार्यम् ॥
शुभग्रहाणां दिनलग्नवर्गे तज्जातकर्म त्वथ नामधेयम् ॥ ४ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठवि० संहितायां जातकर्मनामकर्माध्यायः षड्विंशः ॥२६॥

# अथान्नप्राशनाध्यायः २७।

युग्मेषु मासेषु च षष्ठमासात्संवत्सरे वा नियतं शिशूनाम् ॥
अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत् ॥ १ ॥
मृदुध्रुवक्षिप्रचरेषु भेषु वारेषु शुक्रज्ञसुरार्चिताभ्याम् ॥
धर्मार्कगौरींद्रहिधातृकामादिनेषु तारेन्दुबलान्वितेषु ॥ २ ॥
शुभग्रहाणां भवने विलग्ने नवांशके पूर्वदले दिनस्य ॥
पूर्णेन्दुवारेऽप्यथ वा विलग्ने नवांशके वाप्यथ वा नु तस्य ॥ ३ ॥
न नैधने कर्मविशुद्धियुक्ते दोषैर्विहीनैः शुभदृष्टियुक्ते ॥
नोत्पातपापग्रहदूषितर्क्षे वैनाशिकाद्यर्क्षविवर्जितेषु ॥ ४ ॥
चौलान्नभुक्तौ व्रतबंधने च राजाभिषेके खलु जन्मधिष्ण्यम् ॥
शुभं त्वनिष्टं सततं विवाहसीमन्तयात्रादिषु मंगलेषु ॥ ५ ॥
शुभाशुभेषु त्रिधनायकेन्द्रत्रिकोणगेष्वायरिपुत्रिगेषु ॥
अपष्ठरिष्फाष्टगते हिमांशौ बालान्नभुक्तिः शुभदा च तेषाम् ॥ ६ ॥
कुष्ठी लग्नगते सूर्ये क्षीणे चंद्रे च भिक्षुकः ॥
सन्नदः पूर्णचन्द्रे च कुजे पित्तरुजार्दितः ॥ ७ ॥
बुधे ज्ञानी गुरौ भोगी दीर्घायुर्भोगवान् सिते ॥
वातरोगी शनौ राहौ केतौ चान्नविवर्जितः ॥ ८ ॥
संपूर्णेंदूभयाष्टम्योर्मध्येन्दुः पूर्णसंज्ञकः ॥
विनष्टेंदूभयाष्टम्योर्मध्येऽसौ क्षीणसंज्ञकः ॥ ९ ॥
षष्ठाष्टमांत्यगश्चन्द्रो भोक्तुश्च निधनप्रदः ॥
केन्द्रत्रिकोणगो मन्दस्तस्यान्नमपहारकः ॥ १० ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायामन्नप्राशनाध्यायः सप्तविंशः २७

---

# अथ चौलाध्यायः २८।

तृतीये पंचमेऽब्दे वा स्वकुलाचारतो हितम् ॥
चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः ॥ १ ॥
आधानतो जन्मतो वा सप्तमेऽब्देऽपि कारयेत् ॥
कृत्वाभ्युदयिकं कर्म पश्चात्सर्वं समाचरेत् ॥ २ ॥
सौम्यायने गुरौ शुक्रे दृश्यमाने शुभे दिने ॥
चन्द्रताराबलोपेते शुभलग्ने शुभांशके ॥ ३ ॥
गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म च ॥
पञ्चमासादधः कुर्यात्तदूर्द्ध्वं न च कारयेत् ॥ ४ ॥
गृहनिर्माणमुदधिस्नानं चौलं सुतस्य च ॥
तीर्थयात्रा न स्वश्मश्रु न कुर्याद्गर्भिणीपतिः ॥ ५ ॥
पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् ॥
विपद्यते गुरुश्चैव दम्पती शिशुरब्दतः ॥ ६ ॥
गर्भिण्यां मातरि शिशोश्चौलकर्म न कारयेत् ॥
शताभिषेकेऽप्येवं स्यात्काले वेदकृतेष्वपि ॥ ७ ॥
सर्वेषामेव वर्णानां चूडाकर्मविधिः स्मृतः ॥
केशमूलं पिता ज्ञेयः केशाग्रं जननी तथा ॥ ८ ॥
चौलेनैवायुषो वृद्धिश्चौलेनैवायुषः क्षयः ॥
तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिसत्तमः ॥ ९ ॥
पञ्चमी सप्तमी चैव दशम्येकादशी तथा ॥
त्रयोदशी तृतीया च चौलकर्माणि शोभना ॥ १० ॥
विधातृद्वितये सार्पात्त्रितये च चतुष्टये ॥
धर्मादर्शदिने चौलं श्रेष्ठं कृष्णाद्यवासरे ॥
अदितिद्वितये पौष्णद्वितये श्रवणत्रये ॥

---

१ अथ क्षौरः अयुक्तमिव मनिमाति।

हस्ताच्च त्रितये शाक्रे सैन्दवे चौलमीरितम् ॥ ११ ॥
चंद्रशुक्रगुरुज्ञानां वारलग्नांशकाः शुभाः ॥
एवं सम्यग्विचार्याथ चौलकार्यं च कारयेत् ॥ १२ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां चौलाध्यायोऽष्टाविंशः ॥ २८ ॥

## अथोपनयनाध्यायः २९ ।

श्रुतिस्मृतीनां पदमुत्तमं द्विजस्तदुत्तमत्वं व्रतबन्धलग्नतः ॥
तस्माद्द्विजानां तदवाप्तिकारणं तल्लग्नशुद्धिं कथयामि शास्त्रतः ॥ १ ॥
मौंजीबंधः शस्यते ब्राह्मणानां गर्भाधानाज्जन्मतो वाष्टमेऽब्दे ॥
भूमीशानामेवमेकादशाब्दे वैश्यानां च द्वादशे वेदविद्भिः ॥ २ ॥
विप्राणामुपनयनं वसन्तसमये धराधिनाथानाम् ॥
ग्रीष्मर्तौ शरदि विशां मासाः साधारणाः पंच माघाद्याः ॥ ३ ॥
ऋग्यजुःसामशाखेशा गुरुशुक्रधरात्मजाः ॥
अथर्वणस्य वेदस्य शाखेशश्चन्द्रनन्दनः ॥ ४ ॥
शाखेशगुरुशुक्राणां मौढ्ये बाल्ये च वार्द्धके ॥
नैवोपनयनं कार्यं वर्णेशे दुर्बलेऽपि च ॥ ५ ॥
शाखेश्वरस्ववर्णेशगुरूणां बलपूर्वकम् ॥
ततोऽप्येषां गुरुबलं मुख्यमाचार्यशिष्ययोः ॥ ६ ॥
उक्तेऽपि वर्षे न गुरुर्बली चेच्छन्त्या प्रशस्तं व्रतबंधकर्म ॥
अनुक्तवर्षेऽपि बलप्रदोऽपि न वै तयोरब्दबलो बलीयान् ॥ ७ ॥
शाखेशगुरुशुक्राणामेकस्मिञ्छत्रुनिर्जिते ॥
विद्याव्रतार्थिभिस्तत्र न कार्यं चोपनायनम् ॥ ८ ॥
शाखेशे वा गुरौ शुक्रे स्वनीचगृहसंस्थिते ॥
तदोपनीतः स शिशुर्विद्यावृत्तिविवर्जितः ॥ ९ ॥
नीचांशसंस्थिते शुक्रे शाखेशे वा बृहस्पतौ ॥
स्वकुलाचारविद्द्वेष्टो नीचकर्मरतो व्रती ॥ १० ॥

नीचर्क्षनीचांशकसंस्थितेऽपि शाखेश्वरे वास्फुजितींद्रपूज्ये ॥
व्रती शिशुर्हीनकुलप्रसक्तः शस्त्रोपजीवी स्वकुलं विसृज्य ॥ ११ ॥
स्वारिनीचगते जीवे शाखेशे वा भृगोः सुते ॥
उपनीतस्तदा बालः क्षिप्रादन्त्यजसेवकः ॥ १२ ॥
शाखेशगुरुशुक्राणामेकस्मिञ्छत्रुराशिगे ॥
परदारासु निरतश्चोपनीतस्तदा शिशुः ॥ १३ ॥
शाखेशगुरुशुक्राणां मध्ये शुक्रनवांशगे ॥
एकस्मिन्नुपनीतो यस्तदा मूर्खः खलो भवेत् ॥ १४ ॥
शत्रुराशौ तदंशस्थे चैकस्मिन्खचरे व्रती ॥
शाखेशगुरुशुक्राणां महापातककृद्भवेत् ॥ १५ ॥
स्वनीचस्वारिषड्वर्गसंस्थे जीवेऽथ वा सिते ॥
शाखेशे वा तदा बालो महापातककृद्व्रती ॥ १६ ॥
अधिशत्रुगृहस्थे वा तदंशस्थे गुरौ भृगौ ॥
शाखेशे वा व्रती बालस्तदा चांडालसेवकः ॥ १७ ॥
शत्रुनीचाधिशत्रृक्षे स्वांशे वा स्वोच्चभागगे ॥
शाखेशे वा गुरौ शुक्रे न नीचफलमश्नुते ॥ १८ ॥
स्वमित्रराशिसंस्थे वा स्वमित्रांशे च संस्थिते ॥
गुरौ भृगौ वा शाखेशे व्रती विद्यायुतस्तदा ॥ १९ ॥
स्वमित्रगेहे मित्रांशे संस्थे भार्गवनन्दने ॥
गुरौ शाखाधिपे वापि विद्यायुक्तो भवेद्व्रती ॥ २० ॥
स्वाधिमित्रगृहस्थे वा स्वाधिमित्रांशगेऽपि वा ॥
गुरौ शाखाधिपे वापि वित्तविद्याधिको व्रती ॥ २१ ॥
स्वाधिमित्रगृहे स्वाधिमित्रांशकगते व्रती ॥
गुरौ भृगौ वा शाखेशे तत्र विद्याविशारदः ॥ २२ ॥
तुंगस्थे वा तदंशस्थे गुरौ शाखाधिपे सति ॥

उपनीतस्तदा बालो विद्यावान्धनवान्भवेत् ॥ २३ ॥
स्वतुंगतुंगांशगते शाखेशे वा गुरौ सिते ॥
व्रती शिशुर्धनायुष्यव्रतविद्याविशारदः ॥ २४ ॥
सूर्यांशकगते चन्द्रे महापातककृद्व्रती ॥
पण्योपजीवी स्वांशस्थे नीचो निःस्वः खलो भवेत् ॥ २५ ॥
श्रवणादितिकर्कांशसंस्थिते यदि शीतगौ ॥
विद्यावान्धनवाञ्छ्रीमान्व्रतवान्भोगवान्व्रती ॥ २६ ॥
कुजांशकगते चन्द्रे शस्त्रजीवी खलो व्रती ॥
बुधांशकगते चन्द्रे वेदवादी भवेद्वटुः ॥ २७ ॥
जीवांशकगते यज्वा सांगवेदविशारदः ॥
शुक्रांशगे धनी दाता विद्यावित्तविशारदः ॥ २८ ॥
क्षिप्रोद्वाही यज्ञकृत्स्यात्सत्रदो भोगवान्भवेत् ॥
सौरांशकगते चन्द्रे सदा चाण्डालसेवकः ॥ २९ ॥
पापांशकगते चन्द्रे स्वाधिनीचस्थितेऽपि च ॥
अनध्यायोपनीतश्च पुनः संस्कारमर्हति ॥ ३० ॥
नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिने ॥
मेखलाबंधनं शस्तं चौले वेदव्रतेष्वपि ॥ ३१ ॥
प्रशस्ता प्रतिपत्कृष्णा न पूर्वपरसंयुता ॥
चातुर्मास्यद्वितीयायं तृतीया चाक्षये तिथौ ॥ ३२ ॥
उपनीतो यतः श्रीमान्विद्यावान्धनवान्भवेत् ॥
व्रते हि पूर्वसंध्यायां वारिदो यदि गर्जति ॥
तद्दिनं स्यादनध्यायं व्रतबंधे विवर्जयेत् ॥ ३३ ॥
कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् ॥
त्रयोदशी चतुष्कं च अष्टावेते गलग्रहाः ॥ ३४ ॥
विधातृ२गौरी३फणि८पण्मुखा६द्रि१०यमाःस्वकामास्तिथयःप्रशस्ताः॥

मध्येऽर्करुद्रेऽपि च ते प्रशस्ते सुहृत्स्वतुंगर्क्षगते शशांके ॥ ३५ ॥
त्यक्त्वा चतुर्थीमपि कृष्णपक्षे त्वाद्यं त्रिभागं शुभदं व्रते च ॥
शस्ता सितेज्येन्दुजवासरास्ते रवीन्दुवारौ खलु मध्यमौ तौ ॥ ३६ ॥
हस्तत्रये च श्रवणत्रये च धातृद्वये त्र्युत्तरमैत्रभेषु ॥
पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौंजिकर्म ॥ ३७ ॥
दिवसस्य त्रिभागे तु पूर्वाह्णे कर्म दैविकम् ॥
द्वितीये मानुषं कर्म तृतीये पैतृकं च तत् ॥ ३८ ॥
या चैत्रवैशाखसिततृतीया माघस्य सतम्यपि फाल्गुनस्य ॥
कृष्णद्वितीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥ ३९ ॥
लग्नादिसौम्यग्रहराशयो ये ग्रहा न पापग्रहराशयो ये ॥
ग्राह्याश्च तेऽपि प्रबलैश्च सौम्यैरधिष्ठिताश्चापि निरीक्षिता वा ॥ ४० ॥
शेषैः सुदुष्टः सततं हि कालस्तेभ्योऽपि माष्टुं गुरुरप्यशक्तः ॥
दोषैर्न चाद्याः सगुणैर्गुणाढ्यास्तस्मात्स कालः शुभदः शुभेषु ॥ ४१ ॥
एवं तत्समयं वीक्ष्य शोभनं च समाचरेत् ॥
मंगले दिवसे तस्मिंश्चन्द्रताराबलान्विते ॥ ४२ ॥
कुलीरकांशं परिहृत्य सौम्यनवांशका मौंजिविधौ प्रशस्ताः ॥
ते निन्दिताः क्रूरनभश्चराद्याश्चेदष्टमांशा अपि मानवस्य ॥ ४३ ॥
न नैधनं नैधनशुद्धलग्नं न नैधनर्क्षं न च तन्नवांशम् ॥
न नैधनेशं न तदंशकेशं लग्ने प्रशस्तं न च रात्रिनाथः ॥ ४४ ॥
प्रालेयरश्मौ यदि लग्नसंस्थे बलक्षपक्षेऽपि भवेत्स रोगी ॥
व्रती च सौम्यग्रहवर्गगेऽपि खलोऽतिनिःस्वः श्रुतिकर्महीनः ॥ ४५ ॥
इष्टाः पंच ग्रहा यस्य राशेस्तद्गृहसंज्ञके ॥
रविचंद्रेज्यमुख्यास्ते चत्वारो वा बलान्विताः ॥ ४६ ॥
नीचस्थिताः शत्रुगृहस्थिताश्च पराजिताश्चास्तमिता ग्रहेंद्राः ॥
लग्ने ग्रहास्ते स्वफलं प्रदातुं क्षमा न किंचिद्रिपुदृष्टदेहाः ॥ ४७ ॥

सूर्यभौमशनिराहुकेतवः क्रूरसंज्ञखचराः क्षयेंदुना ॥
पूर्णचंद्रगुरुशुक्रसोमजाः सर्वकर्मसु हि सौम्यखेचराः ॥ ४८ ॥
रवौ लग्नादिकेन्द्रस्थे दोषाः स्फूर्जितसंज्ञकाः ॥
तत्रोपनीतस्य शिशोः कुलनाशो भवेत्तदा ॥ ४९ ॥
कुजे लग्नादिकेन्द्रस्थे दोषा स्फूर्जितसंज्ञकाः ॥
तत्रोपनीतं कौमारं हंति वर्षान्न संशयः ॥ ५० ॥
शनौ लग्नादिकेंद्रस्थे दोषो रुधिरसंज्ञकः ॥
करोति महतीं पीडां व्रतिनो वा गुरोश्च वा ॥ ५१ ॥
राहौ लग्नादिकेंद्रस्थे दोषो रंध्राह्वयो भवेत् ॥
व्रतिनो जननीं हन्ति चार्थं वा न च संशयः ॥ ५२ ॥
केतौ लग्नादिकेन्द्रस्थे दोषश्च उग्रसंज्ञकः ॥
समग्रं व्रतिनो वित्तव्रतविद्याविनाशनम् ॥ ५३ ॥
लग्नषष्ठाष्टमान्त्यस्थः करोति च निशाकरः ॥
व्रतिनो रोगमधनं निर्द्धनं दुःखसंचयम् ॥ ५४ ॥
बुधो लग्नगतो जीवः शुक्रो वाप्यथ शाखपः ॥
करोति व्रतिनं नूनं व्रतविद्याविशारदम् ॥ ५५ ॥
द्वितीयस्था ग्रहाः सौम्याः सौख्यारोग्यबलप्रदाः ॥
तत्र पापग्रहाः सर्वे नूनं तत्फलनाशदाः ॥ ५६ ॥
तृतीयस्थाः शुभाः पापा व्रतविद्याधनप्रदाः ॥
चतुर्थस्थानगाः सौम्याः संपद्रोगधनप्रदाः ॥ ५७ ॥
पंचमस्थानगाः सौम्या नृपपूजार्थसिद्धिदाः ॥
तत्र पापग्रहाः सर्वे सदा सत्फलनाशदाः ॥ ५८ ॥
षष्ठस्थाः खचरा सौम्या दुःखशोकभयप्रदाः ॥
तत्रस्थाः क्रूरखचराः सदा तत्फलनाशदाः ॥ ५९ ॥

---

१ कूजितसंज्ञकाः इति पाठान्तरम् ।

लग्नात्सप्तमगाः सौम्या व्रतविद्यासुखप्रदाः ॥
सर्वे ग्रहाश्चाष्टमस्था निधनाधनशोकदाः ॥ ६० ॥
नवमे सौम्यखचरा वित्तायुष्यशुभप्रदाः ॥
तत्र पापाः सौम्यखेटकृततत्फलनाशकाः ॥ ६१ ॥
सौम्याः कुर्वन्ति दशमे वृत्तिविद्याधनान्वितम् ॥
सर्वे ग्रहाश्च लाभस्थाः कुर्वन्त्यभिमतं फलम् ॥ ६२ ॥
व्ययस्थानस्थिताः सर्वे कुर्वन्ति व्ययशीलिनम् ॥
खलं नीचं पापरतं बुद्धिहीनं विदेशगम् ॥ ६३ ॥
द्वादशस्थं रविं भौमः पश्यन्नाचार्यनेत्रहा ॥
बलिनं बलवान्नूनमचिरात्तु न संशयः ॥ ६४ ॥
दोषोऽप्येको गुणान्हन्ति तद्विरोधी गुणे न चेत् ॥
पंचगव्ययुतं पूर्णं कुंभं मद्यलवो यथा ॥ ६५ ॥
लग्नं सर्वगुणोपेतं दोषेणैकेन दूषितम् ॥
त्यजेत्तदंगुलमिव ह्युरगक्षतदूषितम् ॥ ६६ ॥
दोषोऽप्येको निहंत्येव सकलं गुणसंचयम् ॥
लग्नोत्थं शुभखेटोत्थमनृतं सुकृतं यथा॥ ६७ ॥
पंचांगलग्नलग्नांशशुभग्रहकृतान्गुणान् ॥
दोषोऽप्येको गुणान्हन्ति स्वैरिणी स्वजनानिव ॥ ६८ ॥
निहन्ति सिद्धामृतयोगजातान्पंचांगजातानपि लग्नजातान् ॥
शुभग्रहोत्थानखिलान्गुणौघानेकोऽपि दोषो हि यथा वृकोऽजान्॥६९॥
गुणाननेकाञ्छुभखेटजातान्पंचांगलग्नामृतयोगजातान् ॥
एकोऽपि दोषः सुतरां निहन्ति सुपुण्यराशीनिव कूटसाक्षी ॥ ७० ॥
एकस्मिन् कूटगे दोषे नाशयत्यखिलान्गुणान् ॥
शरीरस्थे क्षये रोगे यथा द्राक्सप्त धातवः ॥ ७१ ॥

इति दोषनिरूपणम् ।

सर्वानिमानतिबलः स्फुरदंशुजालो लग्नोपगः प्रशमयेत्सुरराजमंत्री ॥
एको बहूनि दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव शूलधरे प्रणामः ७२
एकोऽपि केंद्रगः सौम्यः सकलं दोषसंचयम् ॥
विनाशयति घर्मांशुरुदितस्तिमिरं यथा ॥ ७३ ॥
शुभग्रहः स्वोच्चसंस्थो लग्नं पश्यति चेद्यदा ॥
तदा दोषा लयं प्राप्ता ग्रीष्मे कुसरितो यथा ॥ ७४ ॥
निरीक्ष्यमाणे लग्ने तु मित्रसंस्थे शुभग्रहे ॥
दोषा लयं ययुः सर्वे लग्नलग्नांशसंभवाः ॥ ७५ ॥
स्वोच्चांशगे शुभे लग्ने दृष्टे युक्ते यदा तदा ॥
लग्नलग्नांशसंभूताः सर्वदोषा लयं गताः ॥ ७६ ॥
एकोऽपि सौम्यखचरः स्वाधिमित्रगृहस्थितः ॥
आलोकयति चेल्लग्नं सर्वदोषविनाशकृत् ॥ ७७ ॥
मित्राधिमित्रस्वक्षेत्रसंस्थे सति शुभग्रहे ॥
वीक्ष्यमाणे यदा लग्ने तदा दोषा लयं ययुः ॥ ७८ ॥
ये पापखेटप्रभवाश्च दोषा विलग्नलग्नांशकसंभवा ये ॥
केन्द्रे गुरुस्तान्विमलान्करोति फलं यथांभः कतकद्रुमस्य ॥ ७९ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठ विर० संहितायामुपनयनाध्याय एकोनत्रिंशः॥२९॥

## अथ समावर्त्तनाध्यायः ३०।

अधीत्य वेदांश्च तदर्थशास्त्राण्यभ्यस्य लब्ध्वा स्वगुरोरनुज्ञाम् ॥
कुर्यात्समावर्त्तनकर्म पश्चाद्गोदानतः पाणिनिपीडनात्प्राक् ॥ १ ॥
सौम्यायने निर्मलयोः सुरेज्यदैत्येज्ययोर्व्योम्नि वलक्षपक्षे ॥
संत्यज्य रिक्तामवमाष्टमीं च वैनाशिकाख्याखिलऋक्षवृन्दम् ॥ २ ॥
करादिपंचस्वदितिद्वयाश्विविष्णुत्रये त्र्युत्तरधातृभेषु ॥
सपौष्णचान्द्रेषु शुभग्रहर्क्षवारेषु यत्स्नातककर्म शस्तम् ॥ ३ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठ विर० संहितायां समावर्त्तनाध्यायस्त्रिंशः ॥ ३० ॥

## अथ विवाहप्रश्नाध्यायः ३१ ।

शुभे दिने दैवविदं त्वभिज्ञं ताम्बूलपुष्पाक्षतपूर्णपाणिः ॥
कर्त्ता च गत्वा प्रणिपत्य पृच्छेन्निवेद्य तस्मै वरकन्ययोश्च ॥ १ ॥
एकोऽपि लग्नोपगतश्च पापः पापस्ततोऽन्यः खलु सप्तमस्थः ॥
आसप्तमाब्दान्निधनं वरस्य बलान्वितौ तौ कुरुतस्त्ववश्यम् ॥ २ ॥
प्रालेयरश्मौ यदि लग्नसंस्थे तस्मात्कुजः सप्तमराशिसंस्थः ॥
तदाष्टमाब्दात्कुरुतस्त्ववश्यं वरस्य मृत्युं त्वथ वांगनायाः ॥ ३ ॥
स्वनीचगः शत्रुनिरीक्षितश्च पापो विलग्नाद्यदि सप्तमस्थः ॥
विवाहिता सा मृतपुत्रिणी स्याद्वंध्याऽथवा भर्तृविवर्जिता वा ॥ ४ ॥
लग्नात्त्रिपंचास्तदशायगेषु हिमद्युतिर्जीवनिरीक्षितश्च ॥
तयोस्तु संबंधकरस्तदानीं नार्कांशुलुप्तो न च नीचगश्चेत् ॥ ५ ॥
विलग्नगा गोघटकर्कटाश्च हिमांशुदैत्येज्यसमन्वितास्ते ॥
संवीक्षिता वा यदि कन्यकाया लाभं भवेदत्र च पृच्छकस्य ॥ ६ ॥
अनोऽन्यराश्यंशगतौ सितेन्दू निरीक्षितौ तौ बलिनौ विलग्नम् ॥
तयोस्तदानीं कुरुतस्त्ववश्यं संबंधमाजीवितशर्मदं स्यात् ॥ ७ ॥
अयुग्मराश्यंशगते विलग्ने निरीक्षिते पुंखचरैर्दृकाणे ॥
तथाविधे तस्य वरस्य लाभं वदेत्तदानीं खलु कन्यकायाः ॥ ८ ॥
इति ब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां विवाहप्रश्नाध्याय एकत्रिंशः ॥ ३१ ॥

---

## अथ विवाहाध्यायः ३२ ।

कश्चिद्गृहाश्रमसमो न परोऽस्ति धर्मः ।
सोऽपि स्थितः सुगुणवृत्तयुतांगनासु ॥
उद्वाहलग्नवशतो गुणवृत्तलब्धि- ।
स्तासां तथाविधसुलग्नमतः प्रवच्मि ॥ १ ॥
अब्देषु युग्मेष्वपि कन्यकानां स्वजन्मवर्षाच्छुभदो विवाहः ॥

अयुग्मवर्षेषु शुभो नराणां विपर्यये दुःखगदप्रदः सः ॥ २ ॥
दिनाधिपे मेषवृषालिकुम्भनृयुङ्मृगाख्येषु गृहेषु संस्थे ॥
माघद्वये माधवशुक्रयोस्तु मुख्योऽथवा कार्तिकसौम्ययोश्च ॥ ३ ॥
शुक्ले द्वितीयादित एव कृष्णपक्षे दशम्यंतगताः शुभाः स्युः ॥
तास्वष्टमीस्कन्दगणेशदुर्गाश्चतुर्दशी चापि तिथिर्विवर्ज्याः ॥ ४ ॥
दिने दिने वृद्धिमुपागतत्वाद्वली हि चंद्रः शुभ एव शुक्ले ॥
तथैव कृष्णे विलयं गतत्वात्पक्षापरार्द्धात्खलु पाप एव ॥ ५ ॥
वाराः प्रशस्ताः शुभखेचराणां सूर्यार्किवारौ खलु मध्यमौ तौ ॥
त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषौ ॥ ६ ॥
तिस्रोत्तरामूलमघान्त्यमैत्रप्रजेशचंद्रार्कसमीरभेषु ॥
सदा प्रशस्तः खलु कन्यकायाः पाणिग्रहो वेधविवर्जितेषु ॥ ७ ॥
रेखाश्चोर्द्धाः पंच तिर्यक् च पंच द्वे द्वे रेखे कोणयोरत्र चक्रे ॥
क्रमान्न्यसेच्छंभुकोणे द्वितीये रेखायां भान्यग्निभात्साभिजिच्च ॥ ८ ॥
चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धचर्क्षं खेचरेण प्रदिष्टम् ॥
क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्य सौम्यैर्विद्धं नाखिलं पादमेव ॥ ९ ॥
आर्द्रोदयादूर्द्धमिनस्य कार्यं नक्षत्रवृन्दे दशके कदाचित् ॥
मासोक्तकर्मांतरमंगलाद्यं न बोधनेऽह्नि प्रकटं मुरारेः ॥ १० ॥
आर्द्रादिकस्वातिविरामकाले नक्षत्रवृंदे दशके तथैव ॥
विवाहचौलव्रतबंधनाद्यं सुरप्रतिष्ठा न च कार्यमेव ॥ ११ ॥
प्रागुद्गतोऽह्नित्रितयं शिशुः स्याद्वृद्धो दशाहं दिशि तत्र शुक्रः ॥
पश्चाद्दशाहं शिशुरत्र वृद्धः पंचाहमायोभयतस्तु पक्षम् ॥ १२ ॥
वृद्धत्वमिंदोस्त्रिदिनं दिनार्द्धं बालत्वमस्तत्व[illegible]ं च ॥
अस्ते विधौ मृत्युमुपैति कन्या [illegible] च वृद्धे ॥ १३ ॥
येनोक्तमेकं दिवसं शिशुत्वमित्ये[illegible]
महत्वशी[illegible]

स्वजन्मनासर्क्षतिथिक्षणेषु वैनाशिकाद्यृक्षगणेषु भेषु ॥
नोद्वाहमात्माभ्युदयाभिलाषी नैवाद्यगर्भे द्वितयं कदाचित् ॥ १५ ॥
दंपत्योर्जन्मभे चैक्ये राशौ च निधनं तयोः ॥
एकस्य च तथोद्वाहे किंचिद्भेदेऽपि वा न च ॥ १६ ॥
ज्येष्ठे मासे ज्येष्ठयोर्वा नृनार्योर्नैवोद्वाहो नोपरागाद्भुतेषु ॥
सर्वग्रासे सप्तरात्रं तदर्द्धं खंडे त्याज्यं चाद्भुते सप्तरात्रम् ॥ १७ ॥
ग्रस्तोदये चोर्द्धमनिष्टमादौ ग्रस्तास्तमानेऽप्युडुमासपट्कम् ॥
नाड्यश्चतस्रस्तिथिऋक्षयोगे संधिर्द्विपादं करणस्य सन्धिः ॥ १८ ॥
पक्षोऽब्दसन्धिस्त्रिदिनं च माससंधिस्त्रिनाड्योभयसंध्ययोश्च ॥
सवैधृता विष्टिरथाष्टमेंदुः स पापयोगः परिघार्द्धमाद्यम् ॥ १९ ॥
तिस्रोऽष्टकाश्चोक्तनिसर्गदोषाः सर्वत्र वर्ज्याः खलु मंगलेषु ॥
निमित्तसंयोगनिसर्गजानां मध्ये महादोषचयं ब्रवीमि ॥ २० ॥
पंचांगदोषो रविसंक्रमश्च ससंग्रहः कर्तरिकांशदोषौ ॥
चंद्रोऽरिरिष्फाष्टमपापवर्गौ कुजोऽष्टमस्थो भृगुः षट्संस्थः ॥ २१ ॥
गंडांतखार्जूरिकवारदोषविषाख्यनाड्योऽष्टमलग्नराशी ॥
तस्मिन्महादोषचयेऽपि कार्यं कृतं च तन्नाशमुपैत्यवश्यम् ॥ २२ ॥
अकालवृष्टिः कुमुहूर्तदोषो महाव्यतीपातजवैधृतोत्थः ॥
लग्नास्तजाता ग्रहणर्क्षजाता पापर्क्षविद्धर्क्षसमुद्भवा ये ॥ २३ ॥
उत्पातभोल्कामहदाख्यदोषाः सर्वेषु देशेषु सदा विवर्ज्याः ॥
एकोत्तरा विंशतिरत्र दोषाः स्वसंहितायां च पितामहेन ॥ २४ ॥
उपग्रहोल्लत्तभयातितर्क्षं शुभग्रहैर्विद्धविदूषितं यत् ॥
विरुद्धयोगेषु विरुद्धनाड्यो ध्रुराशयश्च ग्रहजन्मधिष्ण्यम् ॥ २५ ॥
या मासदग्धास्तिथयो विलग्नान्यन्धानि शून्यानि च बाधिराणि ॥
द्युदग्धलग्नानि सपंगुकाणज्वालामुखोद्बंधनमासतिथ्यः ॥ २६ ॥
प्रत्यर्कनीहारमहेन्द्रचापविद्युत्वता भूभ्रमणाभ्रदोषाः ॥

मरुत्प्रचारः परिवेषकंपः प्रतीन्दुवैवर्णमथेन्दुभान्वोः ॥ २७ ॥
ध्रुवारवारर्क्षजमृत्युघातहालाहलोत्था तु महानलाद्याः ॥
एतेऽल्पदोषाः क्रमशस्तथैषां देशव्यवस्था क्रियते सुसम्यक् ॥ २८ ॥
उपग्रहर्क्षे कुरुबाह्लिकेषु कलिंगवंगेषु च पातितं भम् ॥
सौराष्ट्रशाल्वेषु च लत्तितं भं देशेषु वर्ज्यं शुभविद्धभं च ॥ २९ ॥
निषिद्धयोगध्रुनराशिजाता निषिद्धनाड्यो ग्रहजन्मभं च ॥
निशासु वारप्रभवादिदोषास्त्याज्याः सदा कौङ्कणसंज्ञदेशे ॥ ३० ॥
ये मासदग्धादिदशैव दोषा विवर्जनीया खलु मध्यदेशे ॥
दुःस्वप्नदुर्दर्शनदुर्निमित्तं दुःशकुनाद्यास्त्वपि यत्र तत्र ॥ ३१ ॥
प्रत्यर्कपूर्वा दशपूर्वदोषास्त्याज्याः सदा मागधगौड्योश्च ॥
नानाभिधानास्तिथिवारजाता नक्षत्रवारप्रभवाश्च दोषाः ॥ ३२ ॥
ते हूणवंगांगखशेषु वर्ज्याः शेषेषु देशेषु न ते निषिद्धाः ॥
तस्मात्तु तेष्वेव विवर्जितास्ते देशेषु चान्येषु न दोषदाः स्युः ॥ ३३ ॥
कृत्वाधुनैषां विषयव्यवस्थां तान्पूर्वशास्त्रानुसरेण सम्यक् ॥
ततो महादोषनिरूपणं च फलं तथा विस्तरतोऽभिधास्ये ॥ ३४ ॥
क्रमशस्तिथिवारर्क्षं योगतिथ्यर्द्धसंज्ञकम् ॥
तत्पंचांगमिति प्रोक्तं पुण्यमर्केन्दुसंभवाः ॥ ३५ ॥
पंचांगसंज्ञात्प्रभवः सदोषस्तस्मिन्कृतं मंगलसंचयं यत् ॥
दहत्यमोघं निखिलं च यद्वद्दावानलो विस्तृतकाननं यत् ॥ ३६ ॥
विषुवतोऽयनतोऽपि दिनत्रयं हरिपदे षडशीतिमुखेषु च ॥
पूर्वतोऽपि परतोऽपि संक्रमान्नाडिकाश्च खलु षोडश षोडश ॥ ३७ ॥
संक्रांतिदोषे त्वचिरात्कृतं यदुद्वाहपूर्वाखिलमंगलौघम् ॥
लाक्षासमूहं ज्वलिताग्निमध्ये विलीयते यद्वदशेषकोटिः ॥ ३८ ॥
यदा यत्र प्रवेशः स्यात्तदा तद्राशिसंक्रमः ॥
तस्मिन्नपि तदा त्याज्या नाड्यः षोडश षोडश ॥ ३९ ॥

इति संक्रांतिः ।

आदित्यभूमिपुत्राद्यैः संयुक्तश्चन्द्रमा यदा ॥
सग्रहाख्यो महादोषो हालाहलविषोपमः ॥ ४० ॥
यः पापखेटोद्भवसग्रहाख्यो दोषः स लग्नोत्थगुणान्समस्तान् ॥
निहंति मत्तेभगणाननेकानेकोऽपि सिंहः प्रबलश्च यद्वत् ॥ ४१ ॥
दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजाः ।
दौर्भाग्यं गुरुणा सितेन सहिते चंद्रे ससापत्न्यकम् ॥
प्रव्रज्यार्कसुतेन सेन्दुजगुरौ वाञ्छन्ति केचिच्छुभम् ।
व्याध्यैर्मृत्युरसद्ग्रहैः शशियुतैर्दीर्घः प्रयासः शुभैः ॥ ४२ ॥
लग्नेऽस्य पृष्ठाग्रगयोरसाध्वोः सा कर्त्तरी स्यादृजुवक्रगत्योः ॥
तावेव शीघ्रौ यदि वक्रचारौ न कर्त्तरी चेति पितामहोक्तिः ॥ ४३ ॥
यः कर्त्तरी नाम महान्हि दोषो लग्नोद्भवानेकशुभग्रहोत्थान् ॥
गुणान्निहंति प्रबलानशेषान्व्याघ्रो यथा गोसमितिं समस्ताम् ॥ ४४ ॥
क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथवा करग्रहणम् ॥
ते यमसदनाभिमुखं गमनं चेच्छंति कन्यायाः ॥ ४५ ॥
पापयोः कर्त्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः ॥
यदा चास्तगयोर्वापि कर्त्तरी नैव दोषदा ॥ ४६ ॥
लग्नादिसर्वे खलु राशयश्च शुभेक्षिताश्चाथ युताः शुभाः स्युः ॥
नवांशकास्तौलिनृयुग्मवत्यश्चापार्द्धभागः शुभदो न चान्ये ॥ ४७ ॥
द्विभर्तृका मेषनवांशके स्याद्वृषांशके स्यात्पशुशीलयुक्ता ॥
धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाप्यजस्रम् ॥ ४८ ॥
सिंहांशके सा पितृमंदिरस्था कन्यांशके वित्तयुता सुशीला ॥
तुलांशके सर्वगुणास्पदा सा कीटांशके निःस्वतरा विशीला ॥ ४९ ॥
चापांशकाद्ये धनिनी द्वितीये भागेऽन्यसक्ता मलिनी गदाढ्या ॥
निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा ॥ ५० ॥
मीनांशके भर्तृसुतार्थहीना शुभग्रहैर्युक्तनिरीक्षितेऽपि ॥

तस्मात्सदैवोक्तनवांशकेषु कुर्याद्विवाहं गुणसंप्रवृद्ध्यै ॥ ५१ ॥
अंत्यांशकश्चेद्विशुभांशकानां मध्ये य एको न शुभप्रदः सः ॥
स एव वर्गोत्तमसंज्ञितश्चेच्छुभप्रदश्चाखिलमंगलेषु ॥ ५२ ॥
वर्गोत्तमं विनान्त्यांशो विवाहे न शुभप्रदः ॥
वर्गोत्तमश्चेदंत्यांशः पुत्रपौत्राभिवृद्धिदः ॥ ५३ ॥
नवांशदोषः सकलं गुणौघं लग्नोत्थसौम्यग्रहसंभवं च ॥
दत्तं निहंतीव वृकोऽजसंघं पड्वर्गजं सौम्यवियच्चराणाम् ॥ ५४ ॥
विधोस्तु षष्ठाष्टमरिष्फदोषः करोति नाशं विविधं गुणौघम् ॥
लग्नांशसौम्यग्रहजं च तद्वत्सुरालवः पावनपंचगव्यम् ॥ ५५ ॥
षष्ठाष्टमद्वादशके शशांके स्थिते ग्रहा वर्द्धयितुं न शेकुः ॥
विवाहमुत्सन्नजनित्रिमुच्चैर्वत्सं यथा वत्सलवत्सकीयम् ॥ ५६ ॥
यः पापषड्वर्गमहान्स दोषः पंचांगसौम्यग्रहलग्नजातम् ॥
गुणौघमंभोधिममोघबाणः शुष्यत्यशेषं त्विव राघवस्य ॥ ५७ ॥
पापषड्वर्गजो दोषो सकलं गुणसंचयम् ॥
हंति यद्वद्घानीकं हरिरित्यक्षरद्वयम् ॥ ५८ ॥
लग्नस्थभौमाष्टमसंस्थदोषो निहंति तत्सर्वगुणान्विशिष्टान् ॥
यथाऽनृतं धर्मचयानशेषानतः परं किं च वधूवरौ च ॥ ५९ ॥
लग्नात्कुजाष्टमो दोषो नाशयत्यखिलान्गुणान् ॥
यथा लग्नांशसंभूतान्कलुषं धर्मसंचयम् ॥ ६० ॥
तनुजातान्गुणनिचयान्निहन्ति भौमाष्टदोषः सः ॥
दंपत्योरपि मरणं करोति यद्वत्परांगनायोगः ॥ ६१ ॥
विलग्नराशेर्भृगुषड्दोषः करोति नाशं विविधान्गुणौघान् ॥
आधिः क्रमाद्यद्वदशेषधातून् मित्राधिमित्रग्रहजानशेषान् ॥ ६२ ॥
भृगुषडाख्यो दोषो वरवध्वोर्द्वाग्वियोगकृत्रूनम् ॥
कन्यां विवाहितां तां भर्तृघ्नीं वा करोत्यचिरात् ॥ ६३ ॥

यदन्तरालं पितृसार्पधिष्ण्ये मूलेन्द्रयोराश्विनपौष्णयोश्च ॥
भसंधिगण्डान्तमिति द्वयं तन्नाड्यः प्रमाणं शुभकर्म हंति ॥ ६४ ॥
अहिवासवपौष्णानामंत्ययामार्द्धमृक्षसंधिः स्यात् ॥
पितृमूलाश्विभानामादौ यामार्द्धमृक्षगण्डान्तम् ॥ ६५ ॥
पुनः पुनः पंचमषष्ठतिथ्योर्यदन्तरालं प्रहरार्द्धकालः ॥
तल्लग्नजातं गुणसंचयं यत्क्ष्वेडं यथा हंति नरं हि नूनम् ॥ ६६ ॥
लग्नांतरालं घटिकार्द्धमेतत्कुलीरहर्य्योरलिचापयोश्च ॥
मीनाजयोः सर्वगुणान्निहंति लोभो यथा सर्वगुणान्नरस्य ॥ ६७ ॥
खर्जूरचक्रस्य समांघ्रिदोषो विलग्नसंभूतगुणानशेषान् ॥
शुभग्रहोत्थानपि तान्निहंति दारिद्र्यमेकं गुणसंहतिं यत् ॥ ६८ ॥
पादेन पादं विनिहंति तस्य राशेर्नवांशं हि नवांशकेन ॥
ग्रहोऽपि पादेन न कृत्स्नधिष्ण्यं नवांशकेनापि न कृत्स्नधिष्ण्यम् ६९
न सर्वराशेरुदयो विलग्नं वेधो न सर्वर्क्षभवः कदाचित् ॥
इष्टांशकं लग्नमुशंति तज्ज्ञा विरुद्धपादा अपि भस्य शस्ताः ॥ ७० ॥
पादेन दूष्यं सकलं च धिष्ण्यं चेद्धिष्ण्यदोषाद्गणं च कृत्स्नम् ॥
गणस्य दोषात्सकलं च दूष्यमतिप्रसंगस्थितपाद एव ॥ ७१ ॥
विषप्रदग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षतादृते ॥
तथैव पादो न शुभोऽवशिष्टाः पादाः शुभाश्चेति पितामहेन ॥ ७२ ॥
अतोऽन्त्यपादमादिगो द्वितीयगस्तृतीयगम् ॥
तृतीयगो द्वितीयकं चतुर्थगस्तु चादिमम् ॥ ७३ ॥
भिनत्ति वेधकृद्ग्रहो न चान्यपादमादरात् ॥
असंभवाच्छशीनयोर्दृशोः समत्वमत्र वै ॥ ७४ ॥
पाद एव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रमतं हि ॥
क्रूरविद्धमशुभं न शोभनं शोभनेषु सकलं न पादतः ॥ ७५ ॥

खार्जूरं यमघंटकश्च कुलिकश्चेत्येव वारोद्भवा ।
दोषा लग्नतदंशसौम्यखचरप्रोद्भूतसर्वान्गुणान् ॥
निघ्नन्त्येव यथा शरीरमखिलं दोषत्रयः प्रोत्कटा- ।
श्चान्योऽन्यागुणसंचयानपि महान्यामार्द्धतुलयाः पृथक् ॥ ७६ ॥
निधनं प्रहरार्द्धे तु निःसत्वं यमघंटके ॥
कुलिके सर्वनाशः स्याद्ग्रात्रावेते न दोषदाः ॥ ७७ ॥

इति वारदोषाः ।

खाक्षा ५० जिना २४ व्योमगुणा ३० खवेदा ४० ।
इंद्राः १४ कुदस्राः २१ खगुणा ३० नखाश्च २० ॥
दंताः ३२ खरामाः ३० खयमाः २० पुराणाः १८ ।
क्ष्माबाहवो २१ विंशति २० रब्धिचंद्राः १४ ॥ ७८ ॥
इंद्रा १४ स्तु काष्ठा १० मनवः १४ षडक्षा ५६ ।
वेदाश्विनो २४ व्योमभुजा २० दशा १० ऽऽशाः १० ॥
नागेंदवो १८ भूपतयो १६ऽब्धिदस्रा २४ ।
व्योमाग्नयो ३० दस्रमुखर्क्षकाणाम् ॥ ७९ ॥
आभ्यः परस्ताद्विषनाडिकाख्यास्त्याज्याश्चतस्रः खलु शोभनेषु ॥
विषाख्यनाडीषु कृतं शुभं यद्विनाशमायात्यचिराच्च सर्वं ॥ ८० ॥
कुर्वंति नाशं विषनाडिकास्ता लग्नाश्रितानंशगणान्विशेषान् ॥
जंतून्यथा कुष्ठभगंदराशैव्याघातशूलक्षयवातरोगाः ॥ ८१ ॥
कुर्वंत्युद्वाहितां कन्यां विधवां वत्सरत्रयात् ॥
अन्यस्मिन्मंगले ताश्च निधनं वाऽथ निर्द्धनम् ॥ ८२ ॥

इति विषनाडी ।

यस्यास्तु लग्ने तदधीश्वरे वा राशौ तदीशेऽथ विलग्नगे वा ॥
स मृत्युमाप्नोति तदा मनोजस्त्रिनेत्रभालानलवह्निनेव ॥ ८३ ॥
द्वादशं भवति जन्मलग्नतो लग्नमर्थहरमत्र योषिताम् ॥
अष्टमं पुनरतोऽपि मृत्यवे राशितोऽपि फलमेतदेव च ॥ ८४ ॥

जन्मोदयर्क्षान्निधने विलग्ने तदीश्वरेणोपगतेऽथवा स्यात् ॥
कृतो विवाहो भयमृत्युकारी त्रातुं विधाताऽपि न तां समर्थः ॥ ८५ ॥
त्याज्यं तयोर्नैधनभं विलग्नं तदंशकं वाऽथ तदीश्वरं च ॥
तस्मात्स्वजन्मर्क्षनवांशयोश्च लग्नांशकौ नैधनगौ विवर्ज्यौ ॥ ८६ ॥
जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ ॥
जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः ॥ ८७ ॥

इत्यष्टमलग्नराशिदोषाः ।

अकालवृष्टिः प्रभवः सदोषः करोति मृत्युं शुभकार्यकर्तुः ॥
त्रातुं यथा सर्वगुणाः स्त्वशक्तास्तं बन्धुवर्गा विषवह्निदग्धम् ॥ ८८ ॥
अकालवृष्टिप्रभवः स दोषः करोति मृत्युं वरकन्ययोश्च ॥
सीतावियोगप्रभवः सुदीर्घः कोपो यथा दाशरथेर्दशास्यम् ॥ ८९ ॥
करोति निःस्वं कुमुहूर्तदोषः कुमारमुद्वाहितमाशु नूनम् ॥
सप्तांगराज्योद्धतराजरत्नं नलं यथा द्यूतमिवात्मकर्म ॥ ९० ॥
वरस्य लक्ष्मीं निखिलं निहंति संवत्सरार्द्धात्कुमुहूर्तदोषः ॥
दुर्वाससः शाप इव प्रमत्तमहेन्द्रलक्ष्मीमसमां समग्राम् ॥ ९१ ॥
अर्यम्णो भानुवारे शशधरदिवसे राक्षसब्रह्मसंज्ञौ ।
पित्र्याग्नी द्वौ कुजाह्ने शशिसुतदिवसेऽथाभिजित्संज्ञकः सः ॥
जीवाह्ने राक्षसाख्यो भृगुसुतदिवसे ब्राह्मनैऋत्यसंज्ञौ ।
सौरावेते विवर्ज्यास्त्वधननिधनदा मंगले दुर्मुहूर्ताः ॥ ९२ ॥

इति दुर्मुहूर्ताः ।

दोषो महापात इति प्रसिद्धः स वैधृतो हंति वधूं वरं च ॥
तं रक्षितुं लग्नगुणा अशक्ताः स्वबांधवास्तेऽशनिनोपघातम् ॥ ९३ ॥
शास्त्रात्समानीतमहातिपातः सवैधृतो हंति वधूं वरं च ॥
त्रिसप्तवाराणि च जामदग्न्यो क्रोधोऽचिरात्क्षत्रकुलं समस्तम् ॥ ९४ ॥
लग्नास्तशुद्धिस्तु महान्सदोषः करोति मृत्युं वरकन्ययोश्च ॥

त्रातुं यथा लग्नगुणास्त्वशक्तास्तं बंधुवर्गा इव सर्पदष्टम् ॥ ९५ ॥
इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तदसंयुते वा ॥
अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥ ९६ ॥
उदयांशः स्वनाथेन मित्रसौम्येन संयुतः ॥
प्रेक्षितो वा तथास्तांऽशो दंपत्योः पुत्रपौत्रदः ॥ ९७ ॥

इति लग्नास्तशुद्धिः ।

उत्पातभोपप्लवभोग्रखेटविद्धर्क्षतद्धं वरकन्ययोस्तु ॥
विनाशदं लग्नगुणास्त्वशक्तास्त्रातुं यथा पातकिनं स्वकीयाः ॥ ९८ ॥
उत्पातभं ग्रहणभं क्रूरविद्धं स्थितं च भम् ॥
दहतीव शुभं कर्म राघवाग्निशरोंऽबुधिम् ॥ ९९ ॥
लग्नं महादोपविदूपितं यत्र तद्गुणास्त्राणविधौ समर्थाः ॥
राज्ञा धृतं तं पुरुषं च यद्वदन्ये जना बन्धुजनाश्च सर्वे ॥ १०० ॥
लग्नस्थजीवज्ञसितप्रधाना गुणाः परित्रातुमशेकुरेव ॥
लग्नं महादोपविदूपितं यद्भ्रष्टं द्विजं बंधुजना यथैव ॥ १ ॥
लग्नांशसौम्यग्रहवर्गजा ये गुणाः समर्था न च रक्षितुं तत् ॥
लग्नं महादोपविदूपितं यच्छूद्रार्थयज्ञा इव यायजूकम् ॥ २ ॥
मित्रादिमित्रोच्चगृहांशजाता गुणास्त्वशक्ताः परिरक्षितुं यत् ॥
लग्नं महादोपविदूपितं यद्धर्मो यथाऽधर्मपरं द्विजेन्द्रम् ॥ ३ ॥
वर्गोत्तमांशोद्भवचन्द्रजाता गुणास्तदुद्धर्तुमिवासमर्थाः ॥
लग्नं महादोपविदूपितं यद्गुणा यथा निर्गुणिनं च सर्वे ॥ ४ ॥
लग्नं महादोपविदूपितं यदवाप्य सौम्यग्रहकेंद्रजाताः ॥
व्यर्था गुणाः पूर्णसुधाकरस्य करा जनानंदकरा इवान्धम् ॥ ५ ॥
अवाप्य वंध्याः सुगुणास्तदन्यं लाभस्थखेटस्य गृहोच्चजाताः ॥
लग्नं महादोपविदूपितं यत्कटाक्षपाता इव सुंदरीणाम् ॥ ६ ॥
धनत्रिकोणस्थशुभग्रहोत्थगुणा निरर्थास्तदवाप्य सर्वे ॥

लग्नं महादोषविदूषितं यद्विर्वीजिनं यद्वदपत्ययोगः ॥ ७ ॥
अयं गुणो दोषमसुं निहंतीत्युक्तं हि यत्रोभयनामपूर्वम् ॥
गुणः स एवान्यगुणो न शक्तो दोषोऽपि तद्वद्गुणघातुकः सः ॥ ८ ॥
गंतव्यधिष्ण्यं खलु मुक्तभं यत्क्रूरैर्महोत्पातविदूषितं तत् ॥
चन्द्रोपभोगादमलं तदानीं शुभेषु कार्य्येषु शुभप्रदं च ॥ ९ ॥
द्युरात्रिमध्यं खिलमंगलेषु यदार्द्धकालः परिवर्जनीयः ॥
तदाऽभिजिद्ब्राह्ममुहूर्तकत्वाददोषदः सोऽपि शुभप्रदः सः ॥ १० ॥
उक्ताखिलं दोषनिरूपणं यन्निरूपणं स्वल्पमहागुणानाम् ॥
वक्ष्येऽन्यपक्षस्य विदूषणार्थं स्वपक्षसंस्थापननिर्णयार्थम् ॥ ११ ॥
मित्राधिमित्रस्वगृहोच्चमूलत्रिकोणवर्गोत्तमगग्रहोत्थाः ॥
तदंशकेन्द्रोपचयत्रिकोणमहादशाधीशबलाधिकोत्थाः ॥ १२ ॥
लग्नांशकाधीशशुभावलोकसंयोगतद्वर्गजतद्गुणोत्थाः ॥
ये सिद्धयोगामृतसिद्धयोगास्थितिप्रयाताश्च महागुणाः स्युः ॥ १३ ॥
ये चान्यसामान्यगुणाः सदैव स्वभावसंसिद्धगुणा यदास्ते ॥
किं चाल्पदोषानपि लग्नजातान्हंतुं न शक्ताश्च कदाचिदेव ॥ १४ ॥
मित्रर्क्षगो मित्रनवांशगो वा शुभग्रहस्तेन निरीक्षितो वा ॥
यदा विलग्नोपगतः स खेटश्चेद्धंति दोषानपि लग्नजातान् ॥ १५ ॥
शुभोऽधिमित्रर्क्षगतस्तदंशसंस्थोऽपि वा तेन निरीक्षितो वा ॥
स लग्नगो दोषचयं निहंति रामो यथा रावणदैत्यवृन्दम् ॥ १६ ॥
स्वक्षेत्रगः स्वस्य नवांशगो वा शुभग्रहः सौम्यनिरीक्षितो वा ॥
स लग्नगो यत्र निहंति दोषान्पंचाननो यद्वदिभेन्द्रवृन्दान् ॥ १७ ॥
उच्चस्थितः स्वोच्चनवांशगो वा शुभः स्वमित्रेण निरीक्षितो वा ॥
स केंद्रगो यत्र निहंति दोषान्हरिस्मृतिर्यद्वदशेषपापान् ॥ १८ ॥
मूलत्रिकोणर्क्षगतस्तदंशसंस्थः शुभो वाप्यथ मित्रदृष्टः ॥
विलग्नगो यत्र निहंति दोषान्पापं यथा चन्द्रधरे प्रणामः ॥ १९ ॥

वर्गोत्तमस्थशुभखेचरसंयुतं वा ।
लग्नं च तेन खचरेण निरीक्षितं यत् ॥
तत्सर्वदोषनिचयं विनिहंति सद्य-।
स्तार्क्ष्यः समस्तमहिसंघमिव प्रतापात् ॥ १२० ॥
लग्नं स्वनाथशुभमित्रनवांशगं च ।
तस्याधिमित्रशुभखेटनवांशगं वा ॥
तत्तुंगसंज्ञितनवांशकगं यदा वा ।
हंतीव दोषनिचयं कुलिशं नगौघम् ॥ २१ ॥
लग्नेशसौम्यखचरोऽस्तगृहं विहाय ।
केन्द्रस्थितो यदि गतोऽखिलदोषवृन्दम् ॥
एकोऽपि हन्त्युपचयोपगतस्त्रिकोण- ॥
संस्थोऽपि यद्वदनिलोऽभ्रचयं समस्तम् ॥ २२ ॥
पापोऽपि लग्नाधिपतिस्त्रिषष्ठ- ।
लाभस्थितः स्थानबलाधिकश्च ॥
लग्नोत्थदोषान्निखिलान्निहंति ।
पापानि यद्वत्परमाक्षरज्ञः ॥ २३ ॥
त्यक्त्वास्तकेन्द्रे स्थितसौम्यखेटस्त्रिकोणगो वाप्यथ लाभसंस्थः ॥
दोषानशेषानुदयांशजातान्निहंति यद्वत्तिमिरं दिनेशः ॥ २४ ॥
बलाधिकः सौम्यनभश्चरो यः कुटुम्बसंस्थोऽपि निहन्ति दोषान् ॥
लग्नोद्भवं विष्णुपदाब्जतोयं यथाघसंघं शुभवर्गगोऽपि ॥ २५ ॥
यः सिद्धियोगो विनिहंति दोषान्पापेक्षितोपग्रहलत्तपातान् ॥
लग्नेन्दुजामित्रधनप्रचारनीहारविद्युत्परिवेषजांश्च ॥ २६ ॥
दोषानशेषानमृताख्ययोगो निहंति लोभो गुणवृन्दमेकः ॥
प्रत्यर्कयोगर्क्षतिथिद्विचापकुवारपंग्वंधभवांश्च तद्वत् ॥ २७ ॥
सिद्धा तिथिर्हन्ति समस्तदोषान्यान्मासशून्यानपि मासदग्धान् ॥

दिनप्रदग्धानपि चान्यदोषानेकादशी यद्वदशेषपापान् ॥ २८ ॥
एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयादिदोषाः ॥
नश्यंति चन्द्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषाः ॥ २९ ॥
ये लग्नदोषाः कुनवांशदोषाः पापग्रहैर्दृष्टिनिपातदोषाः ॥
लग्ने गुरुस्तान्विमलीकरोति फलं यथांभः कतकद्रुमस्य ॥ १३० ॥
गुणाधिकं दोषविहीनकालं ज्ञात्वा विलग्नेशनवांशपस्य ॥
बलाबलं खेचरिणां सुसम्यग्विचार्य लग्नं प्रवदेदभिज्ञः ॥ ३१ ॥
बले नृनार्योरिनजीवयोश्च तारेन्दुवीर्ये सुदिने सुलग्ने ॥
पंचेष्टकेऽर्केन्दुसुरेज्यमुख्ये जामित्रशुद्धौ हिमदीधितेश्च ॥ ३२ ॥
यत्रार्कगुर्वोरपि नैधनांत्यजन्मादिदुस्थानगयोर्द्वयोर्वा ॥
एकस्य पूजामपि तत्र कृत्वा पाणिग्रहं कार्यमतः सुसम्यक् ॥ ३३ ॥
स्वनीचगाः शत्रुगृहस्थिताश्च तदंशगा श्चास्तमिता ग्रहेंद्राः ॥
दातुं न शक्ताः स्वफलं विलग्ने दष्टुं भुजंगा इव मंत्रविद्धाः ॥ ३४ ॥
लग्नं तदर्द्धं च ततस्त्रिभागो नवांशकश्च द्विरसांशकश्च ॥
त्रिंशांशकश्चेति हि वर्गषट्कं शुभाशुभं व्योमचराधिपत्यम् ॥ ३५ ॥
शास्त्रोक्तमार्गेण सुलग्नकालं स्फुटं समानीय जलादियंत्रैः ॥
संलभ्य तन्मंगलसूक्ष्मकालं संवीक्षयेत्तत्र मिथोर्द्धदृष्ट्या ॥ ३६ ॥
अर्द्धोदयं चास्तमिनस्य वीक्ष्य यंत्रं प्रदद्याज्जलपूर्णपात्रे ॥
अलंकृते गंधसुपुष्पवस्त्रफलाक्षतैर्दैवविदं च पूज्य ॥ ३७ ॥
षडंगुलोत्सेधसमं सुवृत्तं कृतं मुखं सद्विरसांगुलं यत् ॥
पलैस्तु शुल्वैर्दशभिर्जलस्य पूर्णं पलैः षष्टिभिरंबुयन्त्रम् ॥ ३८ ॥
यद्व्यंशमाषत्रय एव वृत्तां शलाकया मध्यमभागविद्धाम् ॥
समुद्रसंख्याङ्गुलदीर्घपात्रे दद्यान्मयूरं नरवानराख्यम् ॥ ३९॥
व्यासांगुलत्रिगुणमायतमिष्टशंकोर्वृत्तं तदेव परिधिश्च तदेव तस्य ॥
व्यासांगुलार्द्धदलमङ्गुलमानमिष्टं सर्वत्र शंकुपरिकल्पनमेवमेव ॥१४०॥

तुल्यां समंताद्गृहवामभागे हस्तोच्छ्रितायुक्तशुभाययुक्ताम् ॥
समण्डपां प्राक्प्रवणामुदग्वा सोपानरम्यां निबिडां ककुप्सु ॥ ४१ ॥
विचित्रितामंकुरचित्रकुंभवितानानाविधतोरणाद्यैः ॥
भृंगारपुष्पांगणविप्रपीठपण्यांगनानृत्यसुगीतवाद्यैः ॥ ४२ ॥
तांबूलपुष्पाक्षतगंधवस्त्रमांगल्यसूत्रैः फलपूर्णपात्रैः ॥
धान्याकहारिद्रगुडैः सलाजैर्दीपैरनेकैर्नयनाभिरामाम् ॥ ४३ ॥
सवेणुवीणामधुरस्वरेण मनोरमां मंगलवेदघोषैः ॥
प्रदक्षिणप्रक्रमणाद्युपेतां तामारुरोहेन्मिथुनं च वेदीम् ॥ ४४ ॥

मृत्युर्नैःस्वं बहुविधधनं भ्रातृहानिः प्रजानाम् ।
व्याधिः सौख्यं बहुविधमतो भर्तृहानिश्चिरायुः ॥
श्रेयो हानिर्भवति हृदये व्याधिरर्थागमश्च ।
भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे ॥ ४५ ॥
नाशः संपद्बहुविधयशोबन्धुवृद्धिः प्रजातिः ।
शस्त्रान्मृत्युर्भवति न चिराद्दीर्घसापन्यबाधा ॥
प्रव्रज्यत्वं दुहितृजनितात्वं धनं भोगभाक्त्वम् ।
दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे ॥ ४६ ॥
मृत्युः शोको बहुविधधनं भ्रातृवैरं कुबुद्धि- ।
र्लक्ष्मीप्राप्तिर्भवति मरणं चोभयोर्वित्तनाशः ॥
स्त्रीणां द्वेष्यं व्यसननिरतिः पुत्रपौत्रार्थसिद्धि- ।
र्भीतिर्भूमेर्वलिनि तनये लग्नभावादिसंस्थे ॥ ४७ ॥
प्रीतिर्वृद्धिः सुगुणनिरतिर्बन्धुपूजा सुताप्ति- ।
र्निर्वैपक्ष्यं तनयरहितत्वं तनुत्यागचिन्ता ॥
धर्मे बुद्धिर्भवतिधरणीलाभमत्यंतवृद्धि- ।
र्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे ॥ ४८ ॥

१ वंशनाशः । इति क्वचित्पाठः ।

लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धि-।
रिष्टावाप्तिर्बहुविधभयं चाश्रमाणां विरक्तिः ॥
पापासक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये।
स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे ॥ ४९ ॥
भोगप्राप्तिर्विविधविभवः स्वैरवृत्तिर्महत्त्वम्।
धूम्राधिक्यं भवति निधनं सर्वनाशो व्यसुत्वम् ॥
तथ्ये प्रीतिर्बहुविधगुणः सर्वसंपत्समृद्धि-।
रस्वं स्त्रीणामुशनसि तदा लग्नभावादिसंस्थे ॥ १५० ॥
स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशील्यम्।
व्याधिः सुश्रीर्मृतिरथ सुखं गर्भपातप्रवृत्तिः ॥
द्यूतासक्तिर्भवति रविजे वैभवं वक्त्ररोगः।
स्वर्भानौ वा शिखिनि च तथा लग्नभावादिसंस्थे ॥ ५१ ॥
सर्वे जामित्रसंस्था विदधति मरणं सौरिसूर्यौ प्रशस्तौ।
षष्ठाष्टन्यायसंस्थौ भवरिपुसहजस्थोऽपि भौमः शशाङ्कः ॥
लग्नान्त्याष्टारिवर्ज्यः परिणयनविधौ ज्ञाऽन्त्यमृत्युर्विवर्ज्यम्।
शुक्रेज्यौ वा सुतायास्पदनवमगतौ भ्रातृशुक्रोऽपि नेष्टः ॥ ५२ ॥

तथा च पितामहः।

लग्नस्था शुभखचराः कुर्वन्ति विवाहितां सुपुत्रवतीम् ॥
सप्तभिरब्दैः क्रूराश्चन्द्रश्च विलग्नगो विधवाम् ॥ ५३ ॥
धनसौख्यवतीं सुभगां धनगाः सौम्यग्रहाः सचंद्राश्च ॥
क्रूरा द्वितीयसंस्था धनहीनां वत्सरैस्त्रिभिः कन्याम् ॥ ५४ ॥
सिसिताः सचंद्रसौम्यास्तृतीयगा वित्तसौख्यवतीम् ॥
पापास्तृतीयसंस्थाः सततं सौभाग्यपुत्रवतीम् ॥ ५५ ॥
बंधुस्थाश्चन्द्रयुताः शुभखचरा भर्तृवल्लभां साध्वीम् ॥
अशुभाश्चतुर्थसंस्था दुःशीलां दुर्भगां च कुर्वन्ति ॥ ५६ ॥

तनयगता सेन्दुशुभा बहुतनयां मानिनीं सुशीलवतीम् ॥
अशुभखगास्तनयगता विपुत्रवतीं वा विवादशीलवतीम् ॥ ५७ ॥
सप्तभिरब्दैर्विधवां शशिशुक्रौ षष्ठगौ कुरुतः ॥
सततं पापासक्तां ज्ञेयाः पापाः प्रभूतशीलवतीम् ॥ ५८ ॥
सप्तमगाः सकलखगाः सप्तभिरब्दैः ससप्तमासैश्च ॥
दंपत्योः सह मरणं यमरक्षितमपि च कुर्वन्ति ॥ ५९ ॥
अष्टमगौ शशिभौमौ धनरहितां तां च पंचभिर्वर्षैः ॥
शुभखचराः कापटिकामितरे साध्वीं चिरंजीवीम् ॥ १६० ॥
नवमगताः शुभखचराः शशिसहिता भोगभाग्यसौख्यवतीम् ॥
अशुभखगाः खलचित्तां परनिरतां पापवादिनीं चैव ॥ ६१ ॥
दशमगताः शुभखेटाः शशिसहिता भर्तृपूजितां साध्वीम् ॥
अशुभखगाः प्रतिकूलां मलिनाङ्गीं कर्कशां मृषाभिरताम् ॥ ६२ ॥
लाभगता निखिलखगा बहुविधधनधान्यपुत्रपौत्रवतीम् ॥
पतिभक्तां शीलवतीं न नीचगास्तारिराशिगाश्च तथा ॥ ६३ ॥
व्ययगो दुग्धाब्धिभवः करोति विधवां च पंचभिर्वर्षैः ॥
मानविहीनां सौम्याः पापाः कुर्वंति नीचवृत्तवतीम् ॥ ६४ ॥
सत्खचराः सदसच्च स्थानस्वशुभफलान्यफलम् ॥
सम्यग्ज्ञात्वाऽथ तयोः शुभफलमधिकं प्रगृह्णीयात् ॥ ६५ ॥
तत्राधिकफलवृन्दे विनाशमायाति दोषचयम् ॥
यद्वच्छशांककिरणे कलंकमखिलं तथैव सदा ॥ ६६ ॥
देशे च काले च तथा शरीरे राज्येऽपि चापद्यपि यत्र तत्र ॥
भावांतरं तत्परिकल्पनीयं गांधर्ववैवाहचतुष्टयार्थम् ॥ ६७ ॥
लग्ने भावाश्चोदितास्तेषु तिष्ठँल्लग्नस्थः संस्तानतीतो द्वितीयः ॥
खेटैस्त्वेवं शेषराशिषु शेषा भावाः सम्यक्कल्पनीयाः क्रमेण ॥ ६८ ॥
ब्राह्मोद्वाहः कायदैवार्षसंज्ञाश्चैते कार्याः प्रोक्तकाले विधेयाः ॥

नूनं गांधर्वासुरौ राक्षसाख्यः पैशाचो वा सर्वकाले विधेयाः ॥ ६९ ॥
ब्राह्मो विवाहस्तज्जातः पुरुषानेकविंशतिम् ॥
आहूय दीयते शक्त्या पुनात्युभयतः स्थितान् ॥ १७० ॥
कायोद्वाहः पावयेत्पट् पड्वंश्यांस्तत्र संभवः ॥
चरतामनया धर्ममित्युक्त्वा दीयतेऽर्थिने ॥ ७१ ॥
दैवोद्वाहो यज्ञवते ऋत्विजे दीयते सदा ॥
पुनात्युभयतः सप्त पुरुषांश्चैव तत्रजः ॥ ७२ ॥
आर्षोद्वाहस्तथाऽऽदाय गोद्वयं दीयते सुता ॥
पुनात्युभयतस्त्रीन्स्त्रीन्पुरुषांस्तत्र संभवः ॥ ७३ ॥
गान्धर्वः समयग्राह्य आसुरोऽर्थप्रदानतः ॥
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ ७४ ॥
वर्या दिनं गणमहेन्द्रवधूविदूरयोन्याख्यराशितदधीशविवश्यनाड्यः ॥
वेधाख्यभूतवहुलिंगविजातिगोत्रपक्ष्यापयोगिनिसुधांशयुजो दशाष्टौ७५

दिनयोनयः।

नवर्क्षपर्यायवशाद्वधूभमाद्यं वरक्षान्तिमथो गणय्य ॥
जन्मत्रिभं पंचमसप्तमं भं त्यक्त्वान्यभं शोभनमामनंति ॥ ७६ ॥

गणयोस्तु।

दस्रादितीज्यमृगमैत्रकरानिलांत्यलक्ष्मीशिभानि नव देवगणः प्रदिष्टः॥
पूर्वात्रयांतकविधातृहरोत्तराणि धिष्ण्यानि मानुपगणोऽत्र नव प्रदिष्टः७७
पितृद्विदैवाग्निशतेन्द्रमूलवस्वाहिचित्रर्क्षगणोऽसुराख्यः ॥
देवासुराणां मनुजासुराणां वैरं महास्नेहमथेतरेषाम् ॥ ७८ ॥

माहेन्द्रयोस्तु।

स्त्रीधिष्ण्यतो वेद ४ दिगा १० दि१ विश्वा १३
नृपा १६ तिधृत्या १८ कृति २२ तत्व २५ तुल्ये॥
पुंभे सति प्रीतिरतीव शश्वन्महेन्द्रवर्गश्च वधूवरस्य ॥ ७९॥

स्त्रीदूरयोस्तु।

स्त्रीधिष्ण्यतो भे नवके वरस्य चाद्ये तयोर्वैरमथ द्वितीये ॥
सामान्यमेतच्च वधूविदूपितं तस्मात्तृतीये नवके विवाहः ॥ १८० ॥

योनिकूटः ।

अश्वेभमेपभुजगद्वयकुक्कुरोतुमेपोतुमूपकमहोंदुरुगोलुलायाः ॥
शार्दूलमाहिपगवारिमृगद्वयाश्वशाखामृगोक्षकपिपंचमुखाश्च सिंहाः ८१॥
गोकुंजराविति यथाक्रममाश्विनादिभानां भवंति खलु कल्पितयोनिरूपाः
एतद्विचार्यमखिलं सदसद्ग्रहज्ञस्त्रिस्कंधवित्प्रवरधीर्विबुधां वरिष्ठः ॥८२॥
बभ्रूरगं श्वैणमिभेंद्रसिंहमोत्वाखुसंज्ञं त्वजवानरं च ॥
गोव्याघ्रमश्वोत्तममाहिपं च वैरं नृनार्योर्नृपभृत्ययोश्च ॥ ८३ ॥

राशिकूटम् ।

पङ्काष्टके मृत्युरथांगनाया राशौ नृनार्योर्नवपंचमेऽपि ॥
अपत्यहानिर्नियतं च नैःस्वं द्विर्द्वादशे प्रीतिरतः परेपाम् ॥ ८४ ॥
कनिष्ठं राशिकूटं यदेतच्च त्रिविधं स्मृतम् ॥
व्यत्ययान्मध्यमं चैतदपरं मध्यमं सदा ॥ ८५ ॥
एकाधिपत्ये त्वथ मित्रभावे स्त्रीपुंसराश्योर्नवरज्जुदोपे ॥
पट्काष्टकादिष्वपि शर्मदं स्यादुद्वाहकर्माचरतोस्तयोश्च ॥ ८६ ॥
एकाधिपे मित्रभावेऽप्युद्वाहः शर्मदः सदा ॥
द्विर्द्वादशे त्रिकोणे च न कदाचित्पड्टके ॥ ८७ ॥
अन्योऽन्यशात्रवे त्याज्यस्त्याज्यः पट्काष्टकेऽपि च ॥
नाडीदोपे भवेन्मृत्युर्गुणैः सर्वैः समन्वितः ॥ ८८ ॥
मध्यनाडी पतिं हंति पार्श्वे नाड्यो तु कन्यकाम् ॥
तस्मान्नाडी सदा त्याज्या दंपत्योः शुभमिच्छता ॥ ८९ ॥
उत्तमे राशिकूटेऽपि समं शात्रवमेव वा ॥
विवाहः शुभदो ज्ञेयो नापि मध्यकनिष्ठयोः ॥ १९० ॥

१ श्रेष्ठम् इति पाठः ।

स्त्रीदूरे समजामित्रे सहजायसुहृद्दशे ॥
शत्रुः समः समो मित्रं मित्रं चेत्परमं सुहृत् ॥ ९१ ॥
नृयुक्तुलामेषघटाश्वसिंहाः कुर्वंत्यजस्रं खलु मित्रभावम् ॥
स्वषष्ठसंख्याभवनेश्च तेऽपि स्वस्वाष्टसंख्याभवनैकता वा ॥ ९२ ॥
अन्योऽन्यं शात्रवं यत्र दंपत्योर्जन्मतस्तयोः ॥
प्रीतिषष्ठाष्टमं त्याज्यमपि नूनं करग्रहे ॥ ९३ ॥
एकराशिपृथग्धिष्ण्येऽप्युत्तमं पाणिपीडनम् ॥
एकधिष्ण्ये पृथग्राशौ सवैक्येऽपि च मृत्युदम् ॥ ९४ ॥
जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम् ॥
व्यत्ययेन यदा योज्यं दंपत्योर्निधनप्रदम् ॥ ९५ ॥
अज्ञातजन्मनां नृणां नामभं परिकल्पयेत् ॥
तेनैव चिंतयेत्सर्वं राशिकूटादि पूर्ववत् ॥ ९६ ॥
रवेः समो ज्ञः सितसूर्यपुत्रावरी परेऽन्ये सुहृदोऽवराटाः ॥
चंद्रस्य नारी रविचंद्रपुत्रौ मित्रे समाः शेषनभश्चराः स्युः ॥ ९७ ॥
समौ सितार्कौ शशिजश्च शत्रुर्मित्राणि शेषा पृथिवीसुतस्य ॥
शत्रुः शशी सूर्यसितौ च मित्रे समाः परे स्युः शशिनन्दनस्य ॥ ९८ ॥
गुरोर्ज्ञशुक्रौ रिपुसंज्ञकौ तु शनिः समोऽन्ये सुहृदो भवंति ॥
शुक्रस्य मित्रे बुधसूर्यपुत्रौ समौ कुजेज्यावितरावरी तौ ॥ ९९ ॥
शनेः समो वाक्पतिरिन्दुसूनुशुक्रौ च मित्रे रिपवः परेऽपि ॥
ध्रुवं ग्रहाणां चतुराननोऽपि शत्रुत्वमित्रत्वसमत्वमुक्तम् ॥ २०० ॥

अथ वश्यकूटम् ।

वश्यास्त्यक्त्वा राशयोऽन्ये नृभाणां ।
सिंहं तस्याप्येकमन्ये विधेयाः ॥
कीटं त्यक्त्वा लोकतोऽन्यत्प्रसिद्धं ।
वश्यावश्यं नैव तोयाल्याश्च ॥ १ ॥

अथ नाडीकूटम् ।

आवृत्तिभिर्भैस्त्रिभिरश्विभाद्यं क्रमोत्क्रमात्संगणयेच्च भानि ॥
यद्येकपर्वण्युभयोश्च धिष्ण्ये नेष्टा नृनार्योर्भृशमेकनाडी ॥ २ ॥
सा मध्यनाडी पुरुषं निहंति तत्पार्श्वनाडी खलु कन्यकां च ॥
आसन्नपर्यायसमागता चेद्वर्षेण साप्यंतरिता त्रिवर्षैः ॥ ३ ॥

अथ वेधकूटम् ।

पूर्वाश्विन्योर्याम्यमैत्राख्ययोश्च वह्नीन्द्राग्न्योर्वायुतोयेशयोश्च ॥
विश्वेंद्रोर्वै त्वाष्ट्रजाङ्घ्र्योर्हुताशविष्णोर्विश्वादित्ययोर्जीववाय्वोः ॥ ४ ॥
मूलाश्लेषातारयोः पौष्णपित्रोर्भाग्यर्क्षाहिर्बुध्न्ययोर्वै विवाहे ॥
तोयेशाहिर्बुध्न्ययोराजपादार्यम्णोर्वैरं सर्वदा वर्जनीयम् ॥ ५ ॥

अथ गंडभूतकूटम् ।

दस्रर्क्षतो भानि भवंति पंच गणा धराम्ब्वग्न्यनिलांबराणाम् ॥
पंचत्र्भूतांत्त्विषुभिः क्रमेण वैरं जलाग्न्योरितरत्र वृद्धिः ॥ ६ ॥

अथ लिंगम् ।

सर्पाच्चतुष्कं वसुवारिरुद्रत्वाष्ट्रत्रयं विश्वयमांत्यशक्राः ॥
स्त्रीलिंगताराः श्रवणेन्दुमूलतारा नपुंसाः पुरुषाः परे स्युः ॥ ७ ॥
स्वकीयलिंगेषु तयोः स्वजन्मधिष्ण्येषु संप्रीतिरतीव नित्यम् ॥
युद्धं भवेद्व्युत्क्रमलिंगकेषु सामान्यमन्यत्र नपुंसकेषु ॥ ८ ॥

जातिकूटम् ।

विप्रक्षमाधीश्वरविड्तुर्या ये पंचमाः संकरजाश्च षष्ठाः ॥
जातिप्रभेदा इति दस्रभादिऋक्षाण्यपि ब्राह्मणपूर्वकाणि ॥ ९ ॥
क्रमादजांघ्रित्रितयं च शिष्टं त्रैवर्णिकानां निखिलानि भानि ॥
सम्यग्विचार्यैवमनुक्रमेण जात्याख्यकूटे च फलं ब्रवीमि ॥ १० ॥
प्रीतिर्नृनार्योस्तुलैक्यजात्यां पुंजातितो हीनकुला समा स्त्री ॥
स्त्रीजातितो हीनकुलः पुमांश्चेद्विलोमजात्यामपि तत्रवैरम् ॥ ११ ॥

गोत्रकूटम् ।

स्युः सप्तगोत्रा भचतुष्टयेन गजाश्विसंख्याऽश्विमुखानि भानि ॥
मरीचिवासिष्ठमहांगिरोऽत्रिपौलस्तिसंज्ञाः पुलहः क्रतुश्च ॥ १२ ॥
यदेकगोत्रे कलहस्त्वजस्रं संप्रीतिवृद्धिर्यदि भिन्नगोत्रे ॥
एषु प्रधानः खलु गोत्रवर्गः संचिन्तनीयः सततं नृनार्योः ॥ १३ ॥

पक्षिकूटम् ।

भेरुण्डपिङ्गलककाकसुकुक्कुटानां बर्ही तथाश्विमुखभानि गणांश्च पंच ॥
बाणर्तुपट्शरशरैः क्रमशो विवाहे भिन्ने गणे कलहमेकगणे प्रवृद्धिः१४॥

अथायकूटम् ।

आया ध्वजाद्याः क्रमशोऽश्विपूर्वभान्यष्टभिर्भैश्च पुनः पुनः स्युः ॥
त्रैवर्णिकं भत्रितयं च शिष्टं प्रक्षेपमेषां खलु पंचमेन ॥ १५ ॥

अथ योगिनीकूटम् ।

ब्रह्माणी कौमारी वाराही वैष्णवी च माहेंद्री ॥
चामुंडा माहेशी श्रीलक्ष्मीश्चाष्टयोगिन्यः ॥ १६ ॥
पूर्ववद्वद्धे सर्वे योगिन्यैक्ये शुभोऽन्यथा त्वशुभः ॥
वर्गो मुख्यतरः स्यात्सर्वेषां सर्वदा करग्रहणे ॥ १७ ॥
पावकदुर्गादिवसौ रविरमरपतिश्च सुरपदिशि ॥
धर्मचतुर्मुखदिवसौ भूतनयः पावकश्च वह्निदिशि ॥ १८ ॥
गिरिसुतशिवदिवसौ वा सुरगुरुः प्रेतपश्च याम्यायाम् ॥
गणपतिहरिदिवसौ दिशि रवितनयः कोणपश्च नैर्ऋत्याम् ॥ १९ ॥
कामभुजंगमदिवसौ असुरगुरुर्वारिपश्च वारुण्याम् ॥
कलिगिरिजात्मजदिवसौ प्रभंजनः शीतरुक्च वायव्याम् ॥ २२० ॥
दिनपतिनिशिपतिदिवसौ दिनपसुतो यक्षराडुदीच्यां च ॥
वसुपितृदिवसौ नूनं स्वर्भानुरथ चंद्रमौलिरैशान्याम् ॥ २१ ॥

अश्विन्याद्यास्ताराः पर्यायपरैरष्टभिश्च विज्ञात्वा ॥
दंपत्योर्दिगधीशग्रहनाथानां तिथीशानाम् ॥ २२ ॥
मित्रत्वे मित्रत्वं शत्रुत्वे शात्रवं च वैवाहे ॥
ज्ञातव्याश्चाष्टादश वर्गाः सम्यक्सदैव विदा ॥ २३ ॥
मुख्योऽप्रजानां ग्रहमित्रवर्गः क्षमाधिपानां ग्रहसंज्ञकं च ॥
विशां प्रधानं वनिता विदूरं योन्याख्यवर्गं सततं परेषाम् ॥ २४ ॥
राशिकूटतदधीशमैत्रतास्त्रीविदूरगणयोनिनाडिकाः ॥
दैवयोगवरगोत्रसमेताः पाणिपीडनविधौ परिचिन्त्याः ॥ २५ ॥
मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः ॥
योऽष्टमः सर्वदोषघ्नस्त्वंधकारं यथा रविः ॥ २६ ॥
सूर्याच्चतुर्थं यल्लग्नमभिजित्संज्ञकं तु तत् ॥
सर्वदोषं निहंत्याशु पिनाकी त्रिपुरं यथा ॥ २७ ॥
सर्वदेशेष्विदं मुख्यं सर्ववर्णेषु सर्वदा ॥
सर्वदोषहरं यद्वद्धरिरित्यक्षरद्वयम् ॥ २८ ॥
सूर्यात्सप्तमलग्नं यद्गोधूलिकमिति स्मृतम् ॥
सर्वदोषहरं यद्वत्पापं गंगाजलं यथा ॥ २९ ॥
गोधूलिकं योगलग्नं भावलग्नं च कल्पितम् ॥
गांधर्वादिविवाहेषु वैश्योद्वाहेषु योजयेत् ॥ ३० ॥
पुत्रोद्वाहान्नैव पुत्र्याः कदाचिदापण्मासात्कार्यमुद्वाहकर्म ॥
ऊर्द्ध्वं तद्वन्मुण्डनान्मुण्डनं च प्रत्युद्वाहं नैव पुण्यद्वयं च ॥ ३१ ॥

पितामहः ।

निर्गमात्पूर्वतो न प्रवेशः शुभस्तत्र संवत्सरान्तावधिः कथ्यते ॥
निर्गमस्त्रीविवाहः पुनः पुंविवाहप्रवेशो न वै मण्डनान्मुण्डनम् ॥ ३२ ॥
पुत्रीविवाहात्परतः सदैव शुभप्रदं पुत्रविवाहकर्म ॥
पुत्रद्वयं नैव ऋतुद्वयेऽपि पुत्रीद्वयं वापि कदाचिदेव ॥ ३३ ॥

एकोदरप्रसूतानामेकस्मिन्वत्सरे यदि ॥
पाणिग्रहो भवेन्नूनं तत्रैका विधवा भवेत् ॥ ३४ ॥
उद्वाहश्चैकजन्यानां न विधेय ऋतुत्रये ॥
सोऽपि हंति तयोरेकं पक्षमब्दत्रयाद्दृशम् ॥ ३५ ॥
विवाहश्चैकजन्यानामेकस्मिन्नुदये कुले ॥
नाशं करोत्येव वर्षं स्यादेका विधवाऽथवा ॥ ३६ ॥
पुत्रोद्वाहात्तेव पुत्रीविवाहोऽपि ऋतुत्रये ॥
अब्दान्तरे मुंडनं च न कदा मुंडनद्वयम् ॥ ३७ ॥
एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोः ॥
पुत्रिकाद्वयमेकस्मै न दद्यात्तु कदाचन ॥ ३८ ॥
नैर्ऋत्यभोद्भूतसुतः सुता वा क्षिप्रादवश्यं श्वशुरं निहंति ॥
तदंत्यपादाज्जनितो निहंति नेत्रोत्क्रमेणाहिभवः कलत्रम् ॥ ३९ ॥
सुरेशताराजनिता धवाग्रजं द्विदैवताराजनिता च देवरम् ॥
पुरंदरर्क्षाज्जनितः सुतस्तदा स्वस्याग्रजं हन्ति न कन्यका यदि ॥२४०॥
महर्षिभिः शास्त्रवितर्कबुद्ध्या न दूषणीयाः कुलदेशधर्माः ॥
तन्मूलमज्ञातसमस्तवेदास्तस्मात्प्रमुख्या प्रथमं हि तेऽपि ॥ ४१ ॥
जनकं जननीं हंति भर्तुर्मूलाहिधिष्ण्यजा ॥
मूलांत्यपादजा नैव तथाऽश्लेषाद्यपादजा ॥ ४२ ॥
षष्ठाष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः ॥
पंचांगसंशुद्धिदिनं विनाऽपि विधावसद्गोचरगेऽपि कार्यः ॥ ४३ ॥
प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयम् ॥
विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ २४४ ॥
इति श्रीमहर्षिवसिष्ठविरचितायां संहितायां विवाहाध्यायो द्वात्रिंशः ॥ ३२ ॥

# अथ राजाभिषेकाऽध्यायः ३३ ।

आधानजन्मेशदशाधिनाथरवींदुभौमेज्यासितैर्बलस्थैः ॥
उत्पातदोषादिविवर्जितेषु धराधिपानामभिषेक इष्टः ॥ १ ॥
मूलत्रिकोणस्वगृहोच्चमित्रगृहास्थितैर्वाऽपि तदंशसंस्थैः ॥
शुभे विलग्ने सततं ग्रहेंद्रा दिशंति लक्ष्मीं विपुलां च कीर्तिम् ॥ २ ॥
स्वनीचगैर्वैरिगृहादिगैर्वा ह्यस्तंगतैर्वक्रमुपागतैर्वा ॥
पापोदये शोकभयं त्वकीर्तिं दिशंति राज्ञां भृशमम्बराटाः ॥ ३ ॥
शीर्षोदये चोपचये गृहे वा स्वजन्मलग्नादथ लग्नगेऽपि ॥
शुभग्रहैर्युक्तनिरीक्षिते वा पदं स्थिरं स्यात्सततं च राज्ञाम् ॥ ४ ॥
रिक्तास्वमायां बुधभौमवारविवर्जिते वारदिनेषु चैव ॥
खले दिने ऋक्षनिशांशियोश्च न नैधने भे त्वभिषेक इष्टः ॥ ५ ॥
पापग्रहैः स्वान्त्यगतैश्च निःस्वो रोगी विलग्नोपगतैर्भवेत्सः ॥
पदच्युतः सतचतुर्थसंस्थैः पुत्रस्थितैः सर्वसुखैर्विहीनः ॥ ६ ॥
भ्रष्टोत्सुकः कर्मगतैरनायुर्मृत्युस्थितैर्वीर्ययुतैश्च पार्थैः ॥
लग्नव्ययाद्यारिगतः शशांकः क्षितीश्वरं हंति तदा बली चेत् ॥ ७ ॥
केन्द्रत्रिकोणत्रिधनायसौम्यैस्त्रिषष्ठलाभारिगतैश्च पापैः ॥
षष्ठाष्टलग्नव्ययवर्जितेन चंद्रेण राज्ञां शुभदोऽभिषेकः ॥ ८ ॥
यस्याभिषेके पुरुहूतमंत्री लग्ने त्रिकोणे यदि वा भवेत्सः ॥
षष्ठे कुजः कर्मगतश्च शुक्रः स मोदते विक्रमराज्यलक्ष्म्या ॥ ९ ॥
दुश्चिक्यलाभारिगता विनार्की खस्थेऽमरेज्ये यदि बंधुगे ज्ञे ॥
यस्यात्र योगे क्रियतेऽभिषेकश्चिरायुपस्त्वस्य पदं स्थिरं स्यात् ॥ १० ॥
शुभेषु चन्द्रयोगेषु स्वयोगेषु शुभेषु च ॥
राजयोगेषु यो राजा ह्यभिषिक्तः क्षितीश्वरः ॥ ११ ॥

---

१ आदिशब्दाच्छत्रोरशादिग्रहणम् ।

प्राग्भागे मंदिरस्याथ गोमयेन तु कारयेत् ॥
मंडलं चतुरस्रं तद्वर्णकैः समलंकृतम् ॥ १२ ॥
तत्र भद्रासनं सम्यगर्चयेत्सुमनोहरम् ॥
गंगातोयसुसंपूर्णस्वर्णकुंभोदकैः सह ॥ १३ ॥
दिग्विदिक्षु स्थितैः शुक्लगंधमाल्यांबरार्चितैः ॥
शतौषधीमूलहेमरत्नसद्बीजपल्लवैः ॥ १४ ॥
मृत्तिका वृषशृंगं च गजदन्तं च रोचनम् ॥
उत्पलं पद्मकं पद्मं मुस्तरेणुककुंकुमम् ॥ १५ ॥
राजसर्षपमुस्तं च देवदारुसमन्वितैः ॥
देवस्यत्वेति मंत्रेण आयुःपुष्टियशस्करैः ॥ १६ ॥
अब्लिंगैर्वेदमंत्रैश्च शुभलग्ने शुभान्विते ॥
भद्रासने स नृपतिरभिषेकं च कारयेत् ॥ १७ ॥
नीराजनं च कर्तव्यं शंखवादित्रनिःस्वनैः ॥
आशिषो वाचनं कृत्वा चार्चयेच्च सुरान्पितॄन् ॥ १८ ॥
आयुधानि च पट्टं च विप्रान्गन्धादिनाऽर्चयेत् ॥
शुक्लमाल्यांबरधृतः प्राङ्मुखस्य महीपतेः ॥ १९ ॥
पट्टं शिरसि बध्नीयात्सिंहासनगतस्य च ॥
विप्रेभ्यो दक्षिणां दद्यान्मानयेन्मंत्रपूर्वकम् ॥ २० ॥
ब्रूयात्प्रत्यङ्मुखो राजा नमामि त्वां धरेति च ॥
प्राच्यां मामभिषिंचन्तु वसवस्तेजसे श्रिये ॥ २१ ॥
याम्यायामभिषिंचन्तु मां रुद्रा विजयाय च ॥
आदित्यास्त्वभिषिंचंतु प्रतीच्यां दिशि वृद्धये ॥ २२ ॥
विश्वेदेवास्तथोदीच्यामभिषिंचन्तु तुष्टये ॥
दिगीशास्त्वभिषिंचन्तु मां सदा विजयाय च ॥ २३ ॥

१ आयुधानि पट्टं चेति पाठान्तरम् ।

साम्राज्यमितिमंत्रेण राजानं सम्यगर्चयेत् ॥
व्याघ्रचर्मण्यथासीनं नवालंकारभूषितम् ॥ २४ ॥
छत्रचामरसंयुक्तं राज्यचिह्नसमन्वितम् ॥
पुरोहितश्च जुहुयात्सावित्र्याऽग्नौ प्रयत्नतः ॥ २५ ॥
उदुंबरसमिद्भिश्च आज्येनाष्टोत्तरं शतम् ॥
विद्वत्पुरोहितामात्यवृद्धबंधुसमन्वितैः ॥ २६ ॥
तदा संचिंत्य सप्तांगं प्रजाधर्मेण पालयेत् ॥
एवं यः कुरुते सम्यक्स राजा वर्द्धते चिरम् ॥ २७ ॥
अभिषेकविधिं चोक्त्वा तदाचारः प्रवक्ष्यते ॥
अभिषेकगुणोपेतं राजानं धर्मशीलिनम् ॥ २८ ॥
श्रीमान्कुलीनोऽव्यसनोऽतिशूरः श्रुतिस्मृतिज्ञः स्मृतिमान्सुदक्षः ॥
धर्मस्वरूपी त्वगदस्त्वलुब्धः शुचिः स्थिरो नीतिपरः सुरूपः ॥ २९॥
पथ्याभिलापी निपुणः कलासु वक्ता सुवेषः प्रियवाक्कृतज्ञः ॥
वृद्धोपसेवी गुणवान्गभीरः स्वरन्ध्रगोप्ता पररन्ध्रवेत्ता ॥ ३० ॥
दाता सहिष्णुर्विजितेंद्रियश्च मानी सुसप्तांगयुतो विनीतः ॥
उत्साहमंत्रः प्रभुशक्तियुक्तश्चतुर्विधोपाययुतस्त्वभीतः ॥ ३१ ॥
पंचांगमंत्रे कुशलः प्रगल्भः षाड्गुण्यवृंदे विजयी सदा सः ॥
पंचांगमंत्रे त्वथ षड्गुणानां नामानि वक्ष्ये च पृथक् पृथग्वै ॥ ३२ ॥
आद्योपायः सुप्रारंभस्त्वर्थातिर्गुणपूर्णता ॥
देशकालविभागश्च विनिपातविचारणम् ॥ ३३ ॥
स्वकार्यसिद्धिरित्येवं मंत्रः पंचांगसंज्ञकः ॥
सामभेदप्रदानाख्या दंडोपायश्चतुर्विधः ॥ ३४ ॥
सन्धिविग्रहयानाख्यद्वैधीभावसमन्वितः ॥
संश्रयश्चेति नीतिज्ञैः षड्गुणाः परिकीर्तिताः ॥ ३५ ॥
एवं लक्षणसंपूर्णः सेव्यः सेवकसज्जनैः ॥

वृद्धविद्वज्जनामात्यैः सर्वदा परिसेवितः ॥ ३६ ॥
सप्तभिरुदयात्सर्वं चिंतयेदात्मनो हितम् ॥
गीततूर्यरवैः सार्द्धं त्यजेच्छय्यां नृपोत्तमः ॥ ३७ ॥
शृण्वन्मंगलवाक्यानि गृहान्निर्गत्य वीक्षयेत् ॥
गोहेमाग्निद्विजघृततोयसूर्यधराधिपान् ॥ ३८ ॥
मौनी मूत्रपुरीषे तु ततः कुर्यादुदङ्मुखः ॥
गन्धलेपक्षयकरं शौचं कुर्याद्विधानतः ॥ ३९ ॥
प्राङ्मुखोदङ्मुखो भूत्वा दन्तधावनमाचरेत् ॥
वितस्तिदीर्घकाष्टेन सत्वगापाटितेन च ॥ ४० ॥
शिरीषलोध्रपनसनिंबजंबूकदंबकैः ॥
कुटजांकोलमकुलैर्लक्ष्मीवृद्धिर्भवेत्सदा ॥ ४१ ॥
भांडीरकरवीराम्लैर्नीपक्रमुकदाडिमैः ॥
करंजकोविदारार्कैरन्नवृद्धिर्भवेदिह ॥ ४२ ॥
अपामार्गवटप्लक्षखदिरोदुंबरार्जुनैः ॥
बिल्वपुन्नागककुभैरायुर्वृद्धिर्भवेद्ध्रुवम् ॥ ४३ ॥
श्रीखंडचंपकांबष्टनारिकेलविभीतकैः ॥
कंकुष्ठशालनारंगनिचुलैरतुलं यशः ॥ ४४ ॥
पालाशाश्वत्थजंबीरमातुलुंगकुलाम्बकैः ॥
अगस्तितालहिन्तालकंककाष्टैश्च निस्वता ॥ ४५ ॥
तंत्रणीकशमीवेणुमध्वामलकवंजुलैः ॥
विकंकतव्याघ्रपादसर्जकृष्णैर्यशःक्षयः ॥ ४६ ॥
हरीतकीविष्टिनागकेतकोद्दालतापसैः ॥
कार्पासाटकिवागूचीवलाश्लेष्मान्तकैर्गदाः ॥ ४७ ॥
भल्लातको देवदारुर्मदयन्तीक्षुवाल्कैः ॥
त्रिणांगुलाश्मलोहाद्यैः शत्रुभ्यः साध्वसं ततः ॥ ४८ ॥

शृण्वन्हरिकथालापान्संध्यादिनियमं चरेत् ॥
राजसर्षपदूर्वेभदानतीर्थमृत्तिकाः ॥ ४९ ॥
धारयित्वा सहेमाज्यावेक्षणं दर्पणेऽपि वा ॥
नत्वा देवद्विजगुरून्दद्याद्गां वत्ससंयुताम् ॥ ५० ॥
लब्ध्वा तेभ्यः स्वस्तिवाक्यं तिथिश्रवणपूर्वकम् ॥
कुर्याद्वचांसि भिषजां सम्यग्ज्ञाप्य तनुःस्थितिम् ॥ ५१ ॥
शुक्लमाल्यांबरधरः सर्वाभरणभूषितः ॥
भृत्याशिष्टाप्तकाव्यज्ञैर्मन्त्रिनैयायिकैः सह ॥ ५२ ॥
सभां प्रविश्य राज्याभिवृद्धिं धर्मेण चिंतयेत् ॥
ततो माध्याह्निकं कृत्यं कृत्वा ग्रसनपूर्वकम् ॥ ५३ ॥
पुत्राद्यैः सह भुंजीत शृण्वन्गाथां हरेश्रयोः ॥
इष्टालापांश्च निर्वर्त्य गजाश्वादींश्च वीक्षयेत् ॥ ५४ ॥
सायंसंध्यादिकं कृत्वा सभां प्राग्वत्प्रवेशयेत् ॥
ततो राज्ञो विलासिन्यः कुर्यात्संध्याबलिक्रियाम् ॥ ५५ ॥
तैजसेषु च पात्रेषु नैकस्मिन्नथ वा त्रिषु ॥
तत्तद्राज्यानुसारेण पंचस्वपि च सप्तसु ॥ ५६ ॥
तेषु कार्योन्यष्टदलपद्मान्यन्यैर्विचित्रितैः ॥
दलेषु कर्णिकायां च दीपैर्बहुभिरुज्ज्वलैः ॥ ५७ ॥
नीराजयेद्रक्षमंत्रैः सह मंगलपाठकैः ॥
पूर्ववच्चिंतयेद्राज्यं प्रेषयेद्गुप्तचारकान् ॥ ५८ ॥
अंतःपुरं संप्रविशेन्नियम्य त्वंगरक्षकान् ॥
तासां मनोरथान्कृत्वा प्राग्वृत्तं समनुस्मरेत् ॥ ५९ ॥
एवं समाचरेन्नित्यं सदा सत्कीर्तिमाप्नुयात् ॥
तस्मात्सर्वप्रयत्नेन राज्यं धर्मेण पालयेत् ॥ ६० ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविर० संहितायां राजाभिषेकाध्यायस्त्रयस्त्रिंशः॥ ३३॥

# अश्वारिष्टशान्त्यध्यायः ३४।

भूपतेर्यस्य सन्त्यश्वाः स एव विजयी रणे ॥
श्रीमान्स एव तस्माद्धि कार्यमश्वाभिरक्षणम् ॥ १ ॥
सूर्ये स्वात्यर्क्षसंयाते जायंते बहवो गदाः ॥
यदा यदा रोगजननमश्वानामथवा तदा ॥ २ ॥
सलोकपालहैरवपूजां होमं च कारयेत् ॥
भानुवारे च संक्रान्तावयने विषुवद्वयोः ॥ ३ ॥
दिनक्षये व्यतीपाते द्वादश्यामश्वभेऽपि वा ॥
ऐशान्यामष्टभिर्हस्तैश्चतुर्भिर्वाथ मंडपम् ॥ ४ ॥
चतुर्द्वारं वितानस्रक्तोरणाद्यैरलंकृतम् ॥
तन्मध्ये वेदिकान्तस्य पंचविंशतिमानतः ॥ ५ ॥
मंडपस्य बहिः कुण्डं प्राच्यां पूर्वोक्तलक्षणम् ॥
वरयेत्पूर्ववद्विप्रान्स्वस्तिवाचनपूर्वकम् ॥ ६ ॥
सूर्यपुत्रं हयारूढं पंचवक्त्रं दशांबकम् ॥
रक्तवर्णं कशाखण्डं रेवंतं द्विभुजं स्मरेत् ॥ ७ ॥
सूर्यपुत्र नमस्तेऽस्तु नमस्ते पंचवक्त्रक ॥
नमो गंधर्वदेवाय रेवन्ताय नमो नमः ॥ ८ ॥
मन्त्रेणानेन रेवंतं गंधवस्त्राक्षतादिभिः ॥
विधिवद्वेदिकामध्ये तण्डुलोपरि पूजयेत् ॥ ९ ॥
परितः स्वस्वमंत्रैस्ताँल्लोकपालांश्च पूजयेत् ॥
प्राग्वद्ग्रहाः पञ्च पङ्क्तौ रेवन्तस्य समीपतः ॥ १० ॥
ऋग्वेदादिचतुर्वेदाजपेद्द्वारेषु पूर्वतः ॥
पूर्णकुंभान्रक्तवर्णान्गंधवस्त्राद्यलंकृतान् ॥ ११ ॥
पंचत्वक्पल्लवोपेतानष्टमृद्भिः सुसंयुतान् ॥
द्वारेषु स्थाप्य चान्लिंगमंत्रैः कार्यं समर्चनम् ॥ १२ ॥

रेवंतपूजामाचार्यः कृत्वा गृह्यविधानतः ॥
स्थापयेत्तं व्याहृतिभिस्तस्मिन्कुंडे हुताशनम् ॥ १३ ॥
ततस्तत्राज्यभागांते मुखाहुतिमतंद्रितः ॥
अग्नये स्वाहेति हुत्वा घृतेनादौ प्रयत्नतः ॥ १४ ॥
रेवंतपूजामंत्रेण आद्यन्तप्रणवेन च ॥
पलाशसमिधाज्यान्नैः पृथगष्टोत्तरं शतम् ॥ १५ ॥
आचार्यो जुहुयाद्व्रीहींस्तिलान्व्याहृतिभिस्ततः ॥
एकरात्रं त्रिरात्रं वा नवरात्रमथापि वा ॥ १६ ॥
अनेन विधिना कुर्यादेकभुक्तो जितेन्द्रियः ॥
जपादिपूर्वकं सम्यक्कर्ता पूर्णाहुतिं हुनेत् ॥ १७ ॥
ततो मंगलघोषैश्च नैवेद्यं च समर्पयेत् ॥
ततस्तद्धुतशेषेण सह कुंभोदकेन च ॥
प्रदक्षिणां व्रजन्त्यश्वान्सुप्रीतो वह्निमुत्तमम् ॥
जीमूतस्येत्यनुवाकान् चतुरो दिक्षु निक्षिपेत् ॥ १९ ॥
आचार्याय ततो दद्याद्दक्षिणां गोचतुष्टयम् ॥
तदर्धं वा तदर्धं वा यथावित्तानुसारतः ॥ २० ॥
ब्राह्मणेभ्यो जापकेभ्यस्त्वाचार्याद्र्धं प्रदापयेत् ॥
ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपूर्वकम् ॥ २१ ॥
एवं यः कुरुते सम्यगश्वशांतिमनुत्तमाम् ॥
मुच्यते सर्वरोगेभ्यो वर्द्धते नात्र संशयः ॥ २२ ॥
ऐश्वर्यं वीरलक्ष्मीं च लभते सर्वदा नृपः ॥
तस्मात्सर्वप्रयत्नेन त्विमां शांतिं समाचरेत् ॥ २३ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायामश्वारिष्टशान्त्यध्याय-
श्चतुस्त्रिंशः ॥ ३४ ॥

# अथ गजारिष्टशान्त्यध्यायः ३५ ।

यस्य राज्ञो गजाः संति तदधीनाऽखिला धरा ॥
तस्माद्गजाः कल्पनीयाः पोषणीयाश्च सर्वदा ॥ १ ॥
कल्पनं पोषणं तेषां गजवक्त्रप्रसादतः ॥
तस्माद्गजाननो राज्ञां पूजनीयः प्रयत्नतः ॥ २ ॥
तस्मिन्संपूजिते प्रीता ब्रह्मविष्णुमहेश्वराः ॥
इंद्रादिलोकपालाश्च वस्वादित्यमरुद्गणाः ॥ ३ ॥
सुरासुरा ग्रहाः सर्वे गंधर्वोरगराक्षसाः ॥
सिद्धविद्याधरा यक्षपिशाचाः सप्तमातृकाः ॥ ४ ॥
वेतालडाकिनीभूता दिशन्त्वपि मनोरथान् ॥
गजाननो गजपतिर्गजसूक्तं जपेत्सदा ॥ ५ ॥
असावेव प्रभुस्तेषां पोषणे शोषणे सदा ॥
पुरा महेश्वरो देव उक्तवानस्य जन्मनि ॥ ६ ॥
यदा यदा गजानां च जायन्ते व्याधयस्तदा ॥
तदा शांतिं प्रकुर्वन्ति पूजाहोमजपादिभिः ॥ ७ ॥
भानुवारे च संक्रांतौ ग्रहणे चंद्रसूर्ययोः ॥
विषुवत्ययने चैव व्यतीपाते दिनक्षये ॥ ८ ॥
अन्ये च पुण्यदिवसे चंद्रतारावलेष्वपि ॥
दिक्साधनं समभुवि चैशान्ये च सुरालये ॥ ९ ॥
मध्याह्निर्गतैः सूत्रैश्चतुरस्रं च कारयेत् ॥
मंडपं त्वष्टभिर्हस्तैः सूत्रमार्गेण कारयेत् ॥ १० ॥
चतुःषष्टिदलं कृत्वा मडपांतःक्ष्मातलम् ॥
मध्ये चतुष्पदं व्योममंडलं वेदिकास्थलम् ॥ ११ ॥
द्वादशांशात्मकं वायुमंडलं व्योमवेष्टितम् ॥
त्रिंशांशकात्मकं वह्निमंडलं व्योमवेष्टितम् ॥ १२ ॥

निखिलान्मडलान्वेष्टय महीमंडलमास्थितम् ॥
ज्ञात्वाग्निमंडलं तत्र दिक्षु कुंडचतुष्टयम् ॥ १३ ॥
प्राग्रेखामध्यमं कुंडं द्वारं चैकांशमानतः ॥
तथैव कुंडद्वारं च शेषदिक्षु प्रकल्पयेत् ॥ १४ ॥
पूर्वोक्तलक्षणोपेतं मेखलावप्रसंयुतम् ॥
तोरणाद्यैरलंकृत्य वितानं वेदिकोपरि ॥ १५ ॥
आशिषो वाचनं कुर्यात्सम्यक्संकल्पपूर्वकम् ॥
ऋत्विजो वरयेत्पश्चाच्चतुर्विंशतिसंख्यकान् ॥ १६ ॥
विद्यातपोव्रतयुतान्विधिज्ञान्कुशलाञ्छुभान् ॥
तेषां मध्ये शिष्टतममाचार्यं तं प्रकल्पयेत् ॥ १७ ॥
मधुपर्कादिकं कुर्यात्तत्र कार्ये नियोजयेत् ॥
ब्राह्मणाँश्चतुरो होतॄन्कुण्डेषु च नियोजयेत् ॥ १८ ॥
द्वारेषु जापकानष्टौ षट्संख्यानंगजापकान् ॥
गंधपुष्पादिकं दत्त्वा तत्तत्कार्ये नियोजयेत् ॥ १९ ॥
ब्राह्मणाँस्तत्त्वसंख्याकान् भोजयेच्च यथाविधि ॥
कारयेत्तु सुवर्णेन गजवक्त्रं चतुर्भुजम् ॥ २० ॥
अक्षमालाधरं चाब्जबीजदण्डधरं क्रमात् ॥
वाहनायुधवर्णादीन्सर्वेषां कथितं पुरा ॥ २१ ॥
तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि ॥
तन्नो दंतिः प्रचोदयात् वामदेवाह्वयो ऋषिः ॥ २२ ॥
छंदोऽसौ तत्र गायत्री गजवक्त्रो हि देवता ॥
कुंभाष्टकं चतुर्द्वारे पूर्वोक्तद्रव्यसंयुतम् ॥ २३ ॥
लिखेदष्टदलं पद्मं वेदिकां तण्डुलोपरि ॥
गजवक्त्रं कर्णिकायां लोकपालान्दलेषु च ॥ २४ ॥
गणेशशक्त्योर्मध्ये पद्ममष्टदलं लिखेत् ॥

आदित्यादिग्रहांस्तत्र पूजयेत्पूर्ववत्क्रमात् ॥ २५ ॥
गणेशयमयोर्मध्ये पंचकोणं प्रकल्पयेत् ॥
तत्र पञ्चमहाभूतानर्चयेत्पूर्ववत्तदा ॥ २६ ॥
गणेशाम्बुपयोर्मध्ये वर्तुलं मण्डलं लिखेत् ॥
तत्रार्चयेदष्टभुजां महिषासुरमर्दिनीम्॥ २७ ॥
गणेशसोमयोर्मध्ये मंडले वर्तुलं लिखेत् ॥
तत्रार्चयेत्प्रयत्नेन चाश्विनीदेवताह्वयम् ॥ २८ ॥
ऐशान्यामर्चयेद्रुद्रमंडलं तेजसां निधिम् ॥
आग्नेय्यामर्चयेद्विष्णुमंडलं हाटकात्मकम्॥ २९ ॥
वेदात्मकं च नैर्ऋत्यामर्चयेद्ब्रह्ममंडलम् ॥
वायव्यामर्चयेत्सम्यङ्मण्डलं प्रणवात्मकम् ॥ ३० ॥
रुद्रेण पुरुषसूक्तेन चतुर्वेदादिमंत्रकैः ॥
प्रणवस्य ऋषिच्छंदो देवताः कथिताः पुरा ॥ ३१ ॥
तत्तद्वर्णैर्गंधपुष्पैर्वस्त्रधूपैश्च दीपकैः ॥
सम्यक्कृत्वोपचाराणि रक्तवस्त्रैर्गजाननम् ॥ ३२ ॥
प्राक्कुंडं गजवक्त्रस्य पंचभूतात्मकं ततः ॥
दुर्गाकुंडं प्रतीच्यां च ह्युदक्कुंडं ग्रहात्मकम् ॥ ३३ ॥
तदेवाश्विनकुंडं च ग्रहहोममतः परम् ॥
दिक्कुण्डैर्दिक्षु दिग्घोमः कर्तव्यः स्वस्वमंत्रकैः ॥ ३४ ॥
स्वगृह्यविधिना कुंडे स्थापयेच्च हुताशनम् ॥
मुखान्ते स्वस्वकुण्डे च जुहुयात्तन्मुखाहुतिम् ॥ ३५ ॥
पालाशसमिधाज्यान्नैः पृथगष्टोत्तरं शतम् ॥
ग्रहहोमैः समिद्भिश्च होमं पूर्ववदाचरेत् ॥ ३६ ॥
चतुर्दिक्षु चतुर्वेदपारायणपरा द्विजाः ॥

---

१ त्रिकोण मण्डलं लिखेत् इत्यपि क्वचित्पाठः ।

अब्लिंगैर्वारुणैः सूक्तैः कलशार्चनपराश्च ते ॥ ३७ ॥
नैवेद्यं विविधान्नेन बहुवाद्यैः समर्चयेत् ॥
तांबुलानि ततो दद्याच्छांतिवाचनपूर्वकम् ॥ ३८ ॥
एकरात्रं त्रिरात्रं वा नवरात्रमथापि च ॥
अनेन विधिना कुर्यादेकभक्तो जितेन्द्रियः ॥ ३९ ॥
तिलहोमं व्याहृतिभिः सहस्रं चाष्टसंयुतम् ॥
एवं प्रतिदिनं सम्यग्व्रीहिभिश्च यथा पुरा ॥ ४० ॥
सम्पूर्णदिवसे कर्ता कुर्यात्पूर्णाहुतिं ततः ॥
मंत्रपूतोदकैः कर्ता गजानां मार्जयेत्ततः ॥ ४१ ॥
अलंकृत्य पुनः सम्यग्गन्धपुष्पादिभिस्ततः ॥
हुतशेषं ततो दद्यादौपनायनिकं गजे ॥ ४२ ॥
दोषशांतिपंचदुर्गां रुद्रं पुरुषसूक्तकम् ॥
पंचब्रह्मादिभिर्मन्त्रैर्गजशालासु मार्जयेत् ॥ ४३ ॥
गृहीत्वा सुकृतं तेभ्यो दक्षिणां च समर्पयेत् ॥
आचार्याय ततो दद्यान्निष्कानामेकविंशतिम् ॥ ४४ ॥
तदर्द्धमितरेभ्यश्च यजेच्छेषान्स्वशक्तितः ॥
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः ॥ ४५ ॥
एवं यः कुरुते सम्यग्गजशांतिं नृपोत्तमः ॥
सर्वान्कामानवाप्नोति गजवृद्धिं लभेत्तु सः ॥ ४६ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां सं० गजशान्त्यध्यायः पञ्चत्रिंशः ॥ ३५ ॥

## अथ ग्रहणशान्त्यध्यायः ३६ ।

यस्य वै जन्मनक्षत्रे ग्रस्येते शशिभास्करौ ॥
तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः ॥ १ ॥
द्रव्यमंत्रविधानेन तस्य दोषापनुत्तये ॥
उपरागस्नानविधिं सम्यग्वक्ष्ये समासतः ॥ २ ॥

मंडलं चतुरस्रं तु गोमयेन विलेपयेत् ॥
गृहस्येशानभागे तु वर्णकैः समलंकृतम् ॥ ३ ॥
स्थापयेच्चतुरः कुंभांस्तत्र तान्सागरात्मकान् ॥
सर्वदेवात्मकान्स्मृत्वा सर्वतीर्थात्मकाञ्छुभान् ॥ ४ ॥
पंचत्वक्पल्लवोशीरशतौषधिसमन्वितान् ॥
मृत्तिकारत्नहेमेभदन्तगुग्गुलुचंदनैः ॥ ५ ॥
पंचगव्यामृतभ्राजत्स्फटिकैः सर्षपांबरैः ॥
शंखकुंकुमतीर्थांबुरोचनैः पद्मकैर्युतान् ॥ ६ ॥
चत्वारः प्राङ्मुखा विप्राः प्रार्थयेयुः पृथक्पृथक् ॥
अब्लिंगैर्वारुणैः सूक्तैः स्वस्तिवाचनपूर्वकम् ॥ ७ ॥
तिलहोमं व्याहृतिभिः सहस्रं चाष्टसंयुतम् ॥
एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् ॥ ८ ॥
आमंत्र्य नवभिर्मंत्रैः कुंभान्संकल्पपूर्वकान् ॥
एतानेव ततो मंत्रान्स्वर्णपट्टे ततो लिखेत् ॥ ९ ॥
कर्तुः शिरसि तान्बध्वा वाब्लिंगैर्वेदमंत्रकैः ॥
सुमंत्रितैः कुंभजलैः स्नाप्य नीराजयेत्ततः ॥ १० ॥
दद्यात्पट्टं ग्रहज्ञेभ्यः शुक्लमाल्यांबरः शुचिः ॥
ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः ॥ ११ ॥
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ॥
सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु ॥ १२ ॥
चतुःशृंगः सप्तहस्तस्त्रिपादो मेषवाहनः ॥
अग्निश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु ॥ १३ ॥
मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः ॥
चन्द्रोपरागसंभूतामग्निः पीडां व्यपोहतु ॥ १४ ॥
यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः ॥

यमश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु ॥ १५ ॥
रक्षोगणाधिपः साक्षात्प्रलयानलसन्निभः ॥
खड्गव्यग्रोऽतिकायश्च रक्षःपीडां व्यपोहतु ॥ १६ ॥
नागपाशधरो देवः सदा मकरवाहनः ॥
वरुणोंऽबुपतिः साक्षाद्ग्रहपीडां व्यपोहतु ॥ १७ ॥
प्राणरूपो हि यो लोकान्याति कृष्णमृगप्रियः ॥
वायुश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु ॥ १८ ॥
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः ॥
चन्द्रोपरागकलुषं पीडां चापि व्यपोहतु ॥ १९ ॥
योऽसाविंदुधरो रुद्रः पिनाकी वृषवाहनः ॥
चन्द्रोपरागपापानि स नाशयतु शंकरः ॥ २० ॥
त्रैलोक्ये यानि भूतानि चराणि स्थावराणि च ॥
ब्रह्मार्कविष्णुयुक्तानि तानि पापं दहंतु मे ॥ २१ ॥
आमंत्रणे लेखकोक्तास्त्वेते वै नवमंत्रकाः ॥
अर्चयित्वा पितृन्देवान्गोभूस्वर्णांबरादिभिः ॥ २२ ॥
अनेन विधिना यत्नाद्ग्रहस्नानं समाचरेत् ॥
न तस्य ग्रहपीडा वा न च बंधुधनक्षयः ॥ २३ ॥
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥
सूर्यग्रहेऽप्येवमेव सूर्यनाम्ना विधीयते ॥ २४ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविर० सं० ग्रहणशान्त्यध्यायः षट्त्रिंशः ॥ ३६ ॥

## अथ यात्राध्यायः ३७।

निखिलगुणयुतस्य राज्ञां कथयामि विधानमत्र यात्रायाः ॥
जातकमवलोक्य तदेतत्फलसिद्धिस्त्वन्यथा मृषा भवति ॥ १ ॥
अज्ञातजातकानामपि यात्रां प्रवदेन्निमित्तशकुनाद्यैः ॥
शुभशकुनैः शुभदा स्यादशुभैरेतैस्तदन्यथा भवति ॥ २ ॥

परविषयविजयार्थं गंतुर्वा समरयात्राख्या ॥
निखिला परयात्रा या सामान्या भुवि भवेद्विविधा ॥ ३ ॥
कथिततिथिवासरर्क्षेष्वभिमतफलदा भवेच्च सामान्या ॥
समराह्वया च यात्रा योगविलग्नक्षितीशयोगेषु ॥ ४ ॥
प्रच्छकविलग्नसमये शकुननिमित्तैः शुभावहं वाच्यम् ॥
अक्षतफलतांबूलकरः प्रणम्य दैवज्ञमथ पृच्छेत् ॥ ५ ॥
राज्ञोपकरणवाहनमंगलवाक्यादिमंगलैर्नृपैः ॥
सितवस्त्रपुष्पगंधश्रुतिघोषांबुजेक्षुफलरत्नैः ॥ ६ ॥
वत्सयुता गोवनिता ज्वलितानलपूर्णकुंभदुग्धैश्च ॥
दधिमधुपिशिताज्योदनवेश्यावृषमद्यभूषणैर्जयदा ॥ ७ ॥

स्तनचरणगलोष्ठाङ्गुष्ठहस्तोत्तमांग- ।
श्रवणवदननासागुह्यरन्ध्राणि भूयः ॥
स्पृशति यदि करांग्रैर्गण्डकाद्यंसकं वा ।
समरभुवि तदानीं शत्रुसेनां निहंति ॥ ८ ॥

प्रच्छकयात्रासमये शकुनं प्रास्थानिकं भवति ॥
स्वगृहं पुनरागमने प्रवेशशकुनं जयप्रदं नृपतेः ॥ ९ ॥

तृणतुषफणिचर्मांगारकार्पासपंकै- ।
र्लवणगुडवसास्थिक्लीबतैलौषधैश्च ॥
रिपुविडसितधान्यव्याधिताभ्यक्ततक्रैः ।
पतितजटिलमुण्डोन्मत्तवार्तैर्न सिद्धिः ॥ १० ॥

प्रच्छकलग्नादशुभो निधनगो वा विलग्नगः प्रबलः ॥
गुरुसितदृष्टिविहीनः प्रभंगदो वा निधनदोऽपि ॥ ११ ॥
शुभखचरस्त्वशुभो वा वक्रगतो लग्नगो यदा भवति ॥
लग्नगतस्तद्वर्गः प्रभंगदो भवति भूमिपतेः ॥ १२ ॥
प्रच्छकनिधनविलग्नं लग्नगतं वाऽपि नैधनोपगतम् ॥

तत्पतिरष्टमगो वा यदि लग्नगतः प्रभंगदः शीघ्रम् ॥ १३ ॥
प्रच्छकलग्नाद्धिमगुर्निधनगतो वारिराशिगो वाऽपि ॥
शुभखचरदृष्टिहीनः प्रभंगदो नैव निधनराशिस्थः ॥ १४ ॥
शुभखचरस्त्वेको वा विलग्नगस्तुंगराशिगो वा चेत् ॥
जयति तदारिचक्रं स्वराशिगो वाधिमित्रगेहस्थः ॥ १५ ॥
शुभखचरौ द्वौ बलिनौ प्रच्छकलग्नस्थितौ यदा भवतः ॥
बहुविधलाभं विजयं कुरुतस्त्वतिशीघ्रमादिशेत्प्रष्टुः ॥ १६ ॥
वलक्षपक्षे प्रतिपत्प्रयाणे भंगप्रदा वा निधनप्रदा वा ॥
यातुर्मनोभीष्टकरा द्वितीया संपूर्णयात्रा फलदा तृतीया ॥ १७ ॥
तिस्रोऽपि रिक्तास्तिथयः प्रयातुर्मृत्युप्रदाश्चार्थविनाशदा वा ॥
यशस्करी भूरिधनप्रदा च या पंचमी मृत्युकरी च षष्ठी ॥ १८ ॥
सप्तमी विजयदा तथाऽष्टमी शोकदुःखभयदामयप्रदा ॥
सर्वदुःखशमनी यशस्करी लाभदा च दशमी निरंतरम् ॥ १९ ॥
पशुप्रदा मानकरी सुगंधरक्तांबरानेकशुभप्रदा स्यात् ॥
एकादशी चित्रमृगप्रभूतधान्याकराद्युत्तमवस्तुदा स्यात् ॥ २० ॥
भूरिभूतिनाशिनी भूरिधर्महारिणी ॥
भूरिभीतिदायिनी द्वादशी प्रभंगदा ॥ २१ ॥
त्रयोदशी सुभोगदा विपक्षपक्षनाशिनी ॥
विनाशदाथ पूर्णिमा यशःक्षयं करोति वा ॥ २२ ॥
सितेतराद्यवासरो विभूतिसौख्यभोगदः ॥
सितेतरे जघन्यके फलप्रदाश्च वासराः ॥ २३ ॥
सुरेज्यदैत्येज्यशशीन्दुजानां वाराश्च वर्गाः शुभदाः प्रयाणे ॥
आदित्यभूसूनुशनैश्चराणां वाराश्च वर्गा न शुभप्रदाः स्युः ॥ २४ ॥
पौष्णद्रयादित्यकरेज्यमित्रविष्णिवद्वसुस्वाह्वयभानि यानि ॥
श्रेष्ठानि यात्रासु नवैव तानि मुक्त्वा त्रिपञ्चादिमसप्तभानि ॥ २५ ॥

तिस्रोत्तरा वारुणनैर्ऋतेन्द्रपूर्वात्रयत्राह्मदशैव भानि ॥
मध्यानि कष्टान्यनिलानलेशाद्विदैवचित्राहिमयांतकानि ॥ २६ ॥
पुरुहूतदिशं पुरन्दरर्क्षे नेयाद्याम्यदिशं त्वजांघ्रिधिष्ण्ये ॥
जलनाथदिशं पितामहर्क्षे शूलाख्यान्यथ सौम्ययमर्क्षे ॥ २७ ॥
तुहिनकिरणमंदवारे शक्रदिशं न च व्रजेद्गुरौ च याम्यायाम् ॥
रविसितदिने प्रतीच्यां सौम्यदिशं ज्ञारयोश्च वारशूलाः स्युः ॥ २८ ॥
मेषादिमीनपर्यंतं पश्चिमादिग्रदक्षिणम् ॥
चन्द्रकण्टकमित्याहुर्गमनं कार्यनाशनम् ॥ २९ ॥
शूलाख्यानि च धिष्ण्यानि शूलसंज्ञाश्च वासराः ॥
यायिनां मृत्युदाः शीघ्रमथवाऽश्वादिहानिदाः ॥ ३० ॥
पुर्वादिषु चतुर्दिक्षु वह्निधिष्ण्यान्निरन्तरम् ॥
सप्तसप्तक्रमेणैव दिग्द्वाराख्यानि भानि वै ॥ ३१ ॥
न लंघ्यः परिघो दंडस्त्वाग्नवायुदिगाश्रितः ॥
पूष्यार्काश्विनमैत्राणि सर्वदिग्द्वारकाणि च ॥ ३२ ॥
सर्वदिक्ष्वपि यातॄणां सर्वकामार्थदानि च ॥
पुर्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः ॥ ३३ ॥
सर्वदिक्षु प्रशस्तोऽपि पुष्यः सर्वार्थसाधकः ॥
प्रतीच्यां गमने त्याज्यः सौख्यसंपदमिच्छता ॥ ३४ ॥
दिग्द्वारराशयः सर्वे तद्दिग्यातुर्जयप्रदाः ॥
तद्वर्गाश्च तदंशाश्च लग्नाधिपस्तथाविधः ॥ ३५ ॥
एकोऽपि चक्रगः खेटो लग्नस्थश्चारिराशिगः ॥
नीचस्थो वा तदंशस्थो यात्राकाले विनाशदः ॥ ३६ ॥
यात्रायां यस्य वा शुक्रः संमुखो दक्षिणास्थितः ॥
करोति बहुधा नाशं बुधश्चेन्निधनप्रदः ॥ ३७ ॥
दिगीश्वरा भास्करशुक्रभौमराह्वार्किचंद्रज्ञसुरार्चिताः स्युः ॥

दिगीश्वरे यत्र ललाटसंस्थे यात्रा न कार्या न च संनिवेशः ॥ ३८ ॥
राशीनेकं द्विविनाक्रांतराशेरप्रादक्षिण्यात्स्यतेदिग्विदिक्षु ॥
यद्दिग्राशौ लग्नगे संमुखत्वे तद्दिग्यातुर्मृत्युदस्तद्दिगीशः ॥ ३९ ॥
प्रयाणसमये यस्य विद्युन्नीहारवृष्टयः ॥
अकालजा भवंत्येते सदा भंगकरा भृशम् ॥ ४० ॥
शुभाशुभनिमित्तानि ह्युत्पातशकुनानि च ॥
यात्राकाले नृणां तेषां निधनायाधनाय च ॥ ४१ ॥
वस्तूनां च शुभानां च पूर्वोक्तानां च वीक्षणम् ॥
प्रयाणसमये यस्य तस्य भंगो भवेत्तदा ॥ ४२ ॥
यात्रायां शकुनं यस्य यदि प्रावेशिकं भवेत् ॥
शोकदुःखं भवेत्तस्य गदो भवति निश्चयात् ॥ ४३ ॥
पूर्वं प्रवेशिकं भूत्वा पश्चात्प्रास्थानिकं भवेत् ॥
सुखेन सिद्ध्यते कार्यं विपरीतं प्रवेशने ॥ ४४ ॥
शस्तावाग्वामभागे शिवगुरुरुच्छुच्छुंदरीकुम्भकाक-।
स्वर्णाक्षीणां प्रयाणे विहगगणपतिर्दक्षिणाः क्षीरवृक्षाः ॥
कृष्णादन्यच्चतुष्पादटति शुभकरो दक्षिणाद्वामभागे।
व्यस्तं सर्वं प्रवेशे खरदिनविहगाः पूर्ववद्वाक्प्रशस्ताः ॥ ४५ ॥
चापवभुभरद्वाजाश्छागो बर्ही तथैव च ॥
एतेषां दर्शनात्सिद्धिर्विजयश्च प्रदक्षिणात् ॥ ४६ ॥
अर्वास्त्वभिमुखं यान्ति च्छत्रचामरदीपकैः ॥
नृत्यमङ्गलघोषाद्यैः सहिता राज्यलाभदाः ॥ ४७ ॥
दृष्टे शवे रोदनवर्जिते च संपूर्णयात्राफलमेव तत्र ॥
प्रवेशकाले तु शवः शवत्वं करोति तद्रोदनवर्जितोऽपि ॥ ४८ ॥
बिडालसर्पशशकगोधाशूकरकीर्तनम् ॥
शुभमालोकनं नेष्टं तदुक्तं वाऽशुभप्रदम् ॥ ४९ ॥

कन्यागोवाद्यशंखं दधिफलकुसुमं पावकं दीप्यमानं।
· यानं वा गोप्रयुक्तं हयगजवृषभं पूर्णकुम्भं द्विजं वा॥
उद्धृत्याज्यं च मांसं जलचरयुगलं सिद्धमन्नं शवं वा।
वेश्यास्त्री मद्यभांडं प्रियहितवचनं मंगलं प्रस्थितानाम्॥ ५०॥
गुडलवणवसास्थिक्लीबकार्पासपंक-।
प्रहरणरिपुमत्तोन्मत्तपग्वंगहीनैः॥
पतितजटिलमुंडव्याधिताभ्यक्ततैलै-।
रखिलफलविनाशः क्षुत्पिपासार्तभूतैः॥ ५१॥
शाखामृगाख्यभल्लूकदर्शनं स्वरमिष्टदम्॥
एतयोः कीर्तनं यत्र यातुः कार्यविनाशनम्॥ ५२॥
जन्मांधमुक्तकेशास्थिकुब्जवंध्याविरूपकैः॥
कषायेन्धननास्तिक्यरजकैः कार्यनाशम्॥ ५३॥
राहुस्थितर्क्षं तस्यास्यं पुच्छं पंचदशं ततः॥
तदेव केतुभं ज्ञेयं सदा राहुः प्रतीपगः॥ ५४॥
त्रयोदश त्रयोदश धिष्ण्यान्युभयपार्श्वयोः॥
मुखभागो मृतपक्षो जीवपक्षस्तु पृष्ठगः॥ ५५॥
रविः स्थायी शशी यायी तद्वशाच्च जयाजयौ॥
जीवपक्षस्थिते सूर्ये मृतपक्षगते विधौ॥ ५६॥
स्थायिनां विजयस्तत्र यायिनां च पराजयः॥
मृतपक्षगते भानौ जीवपक्षगते विधौ॥ ५७॥
यायिनां विजयस्तत्र स्थायिनां च पराजयः॥
जीवपक्षगयोः सूर्यचंद्रयोः संधिमादिशेत्॥ ५८॥
उभौ पराजितौ ज्ञेयौ मृतपक्षगयोस्तयोः॥
चन्द्रे पुच्छे मुखे सूर्ये जयः स्वल्पोऽपि यायिनाम्॥ ५९॥

१ तत्रै' इति वा क्वचित्पाठः।

व्यत्यये व्यत्ययफलं युद्धेष्वेवं विचिंतयेत् ॥
यात्रायामपि सर्वत्र चिन्तनीयं प्रयत्नतः ॥ ६० ॥
यात्रेष्टसिद्धिदाऽर्केन्दोरेकायनगयोस्तयोः ॥
भिन्नायनगयोरह्नि निशि चेदन्यथा वधः ॥ ६१ ॥
स्वाष्टलग्ने लग्नगते राशौ वा लग्नगे सति ॥
यातुर्भंगो भवेत्तत्र द्वादशे वान्यलग्नगे ॥ ६२ ॥
स्वशत्रुलग्नराशौ वा यदा लग्नगते तदा ॥
यातुर्भंगप्रदा नित्यं तदीशे वाथ लग्नगे ॥ ६३ ॥
अष्टलग्नाधिपे यत्र लग्नगे राशिगेऽथवा ॥
दुःखशोकभयं यातुरथवा निधनं भवेत् ॥ ६४ ॥
जन्मराशौ लग्नगते तदीशे वा विलग्नगे ॥
अभीष्टफलदा यात्रा राशीशश्चेच्छुभग्रहः ॥ ६५ ॥
चरराशौ लग्नगते स्थिरे वा सौम्यवीक्षिते ॥
यातुरिष्टार्थदा यात्रा द्विस्वभावे त्वनिष्टदा ॥ ६६ ॥
शीर्षोदये लग्नगते तदीशे वाथ लग्नगे ॥
अत्यन्तफलदा यात्रा तदीशश्चेच्छुभग्रहः ॥ ६७ ॥
जन्मलग्ने लग्नगते तद्वर्गे वा विलग्नगे ॥
अत्यंतफलदा यात्रा तदीशश्चेच्छुभग्रहः ॥ ६८ ॥
शुभग्रहे लग्नगते तद्वर्गे वा विलग्नगे ॥
धनधान्यप्रदा यात्रा त्वथ वा विजयप्रदा ॥ ६९ ॥
दिग्द्वारभे लग्नगते तदंशे वा तदीश्वरे ॥
अर्थलाभप्रदा यातुरथवा विजयप्रदा ॥ ७० ॥
जन्मराशिविलग्नाभ्यां लग्ने चोपचये गृहे ॥
संपूर्णफलदा यात्रा त्वथवा विजयप्रदा ॥ ७१ ॥

१ तदधीशे इति वा पाठः ।

वर्गोत्तमांशगे लग्ने त्वथवापि सुधाकरे ॥
यात्रा कामदुघा यातुर्माता पुत्रस्य वै यथा ॥ ७२ ॥
दिग्द्वारभेषु यात्रोक्तेष्वथ वा सर्वभेषु च ॥
यात्रा रक्षति कर्तारं माता पुत्रमिवानिशम् ॥ ७३ ॥
स्वराशिगे शुभे लग्ने स्वांशगे मित्रगेऽपि वा ॥
यात्रा रक्षति कर्तारं पितेवानुगतं सुतम् ॥ ७४ ॥
स्वाधिमित्रगते सौम्ये लग्नगे वा तदंशगे ॥
यात्रा रक्षति कर्तारं सुविद्येवातुरं द्विजम् ॥ ७५ ॥
वसुभस्योत्तरार्द्धाच्च पंचधिष्ण्येषु सर्वदा ॥
याम्यदिग्यायिनां नृणां दुःखदा भंगदाऽपि वा ॥ ७६ ॥
अष्टमस्त्वभिजिन्नाममुहूर्तो भंगदः सदा ॥
याम्यदिग्यायिनां संति गुणाश्च बहवो यदि ॥ ७७ ॥
अन्यदिक्षु प्रयातॄणां स मुहूर्तो जयप्रदः ॥
प्राक्तनं सुकृतं यद्वन्नराणां पुण्यकर्मणाम् ॥ ७८ ॥
यात्रा संपूर्णफलदा शुभैस्तुंगत्रिकोणगैः ॥
मध्यमा स्वसुहृद्भागैरधमा शत्रुनीचगैः ॥ ७९ ॥
बलप्रदास्य खेटस्य वारवर्गः शुभप्रदः ॥
इतरग्रहवारादिर्यात्रायामशुभप्रदः ॥ ८० ॥
एकार्गलहतं धिष्ण्यं क्रूराक्रांतं च विद्धभम् ॥
उत्पातदूषितं यत्र यात्रा भंगप्रदा सदा ॥ ८१ ॥
तिथिनक्षत्रलग्नानामंतरालं च रुक्प्रदम् ॥
गण्डांतं त्रिविधं तेषां यात्रायां निधनप्रदम् ॥ ८२ ॥
वैनाशिकादिऋक्षेषु विपनाडीषु सर्वदा ॥
यातुर्मृत्युप्रदा यात्रा कालकूटविषोपमा ॥ ८३ ॥
महागणितमार्गेण त्वानीतौ पातवैधृतौ ॥

यो यात्यागमनं तस्य खवृक्षः पुष्पितो यदा ॥ ८४ ॥
कर्तरीदूषिते लग्ने चंद्रे वापि षडष्टगे ॥
यातुर्भंगप्रदा यात्रा लग्ने बहुगुणान्विते ॥ ८५ ॥
पंचांगदुष्टदिवसे लग्ने वा दोषदूषिते ॥
सा यात्रा भंगदा यातुश्चौरभीतिप्रदाथवा ॥ ८६ ॥
शुक्रे चास्तंगते यत्र चंद्रे वास्तमुपागते ॥
तयोर्बाल्ये च वार्द्धक्ये सा यात्रा भयरोगदा ॥ ८७ ॥
यात्रालग्नेऽर्कसंक्रांतिदूषिते त्वयनेन वा ॥
यातुर्मासत्रयादेव शत्रुरोगभयप्रदा ॥ ८८ ॥
केन्द्रत्रिकोणगैः सौम्यैस्त्रिभवारिगतैः परैः ॥
अलग्नरिपुचंद्रेण[१] यात्राभीष्टफलप्रदा ॥ ८९ ॥
यात्रा लग्नस्य केन्द्रेषु शून्येषु शुभखेचरैः ॥
निष्फलं गमनं तस्य जारजातस्य पिण्डवत् ॥ ९० ॥
त्रिकोणे द्वित्रिराशौ वा शून्ये यस्य शुभग्रहैः ॥
निष्फला तस्य यात्रा स्यान्मिथ्यावादस्य वाग्यथा ॥ ९१ ॥
यस्मिन्वारे दुर्मुहूर्तलग्नं भंगप्रदं नृणाम् ॥
रुक्प्रदं वारदोषं च तस्मात्तत्त्रितयं त्यजेत् ॥ ९२ ॥
पश्चादभ्युदिते शुक्रे यायात्प्राचीं तथोत्तराम् ॥
प्राच्यामभ्युदिते तस्मिन्प्रतीचीं दक्षिणां दिशम् ॥ ९३ ॥
सम्मुखे चंद्रजे यत्र मार्गमध्योदिते यदि ॥
यावदस्तमिते तस्मिंस्तावत्तत्रैव संवसेत् ॥ ९४ ॥
प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नरः ॥
चलेन शक्रतुल्योऽपि हृतसैन्यो निवर्तते ॥ ९५ ॥
प्रवेशे स्वगृहे ग्रामे विवाहे देशविभ्रमे ॥

१ अलग्नरिष्फचन्द्रेण इति क्वचित्पाठः ।

प्रतिशुक्रोद्भवो दोषो नैव भौमज्ञयोरपि ॥
तीर्थयात्राविधौ तेषां प्रतिशुक्रं न विद्यते ॥ ९६ ॥
काश्यपेषु वसिष्ठेषु भृग्वत्र्यंगिरसेषु च ॥
भरद्वाजेषु वत्सेषु प्रतिशुक्रं न विद्यते ॥ ९७ ॥
अयमर्थमनुक्तत्वाच्छास्त्रे पैतामहे क्वचित् ॥
तस्मात्संमुखदोषोऽस्ति प्रतिशुक्रस्य सर्वदा ॥ ९८ ॥
तद्दोषशमनार्थाय शांतिं वक्ष्ये समासतः ॥
कृत्वा शांतिं प्रयत्नेन पश्चात्कार्यं समाचरेत् ॥ ९९ ॥
भृगोर्लग्ने भृगोर्वर्गे भृगोर्वारे भृगूदये ॥
उपोष्य भृगुवारेऽपि यावच्छुक्रोदयं व्रती ॥ १०० ॥
रजतेन सुशुद्धेन प्रतिमां कारयेद्भृगोः ॥
लिखेदष्टदलं पद्मं कांस्यपात्रे च तण्डुलैः ॥ १ ॥
शुक्लसूक्ष्मांबरैर्वेष्ट्य प्रतिमां तत्र पूजयेत् ॥
शुक्लपुष्पाक्षतैर्गन्धैर्मुक्ताहारैर्विचित्रितैः ॥ २ ॥
उपचाराणि कार्याणि शुक्रं ते अन्यदित्यृचा ॥
तन्मन्त्रेण जपं कुर्यात्सम्यगष्टोत्तरं शतम् ॥ ३ ॥
कर्मांते तेन मंत्रेण भक्त्या चार्घ्यं प्रदापयेत् ॥
श्वेतगंधाक्षतैः पुष्पैः क्षीरमिश्रितवारिभिः ॥ ४ ॥
दैत्यमंत्री दिवादर्शी चोशना भार्गवः कविः ॥
श्वेतोऽथ मंडली काव्यो विधिस्थो भृगवे नमः ॥ ५ ॥
दत्त्वा ह्यर्घं प्रयत्नेन प्रार्थयेच्चैव भक्तितः ॥
अनेनैव च मंत्रेण प्रांजलिः प्रणतः स्थितः ॥ ६ ॥
त्वत्पूजयाऽनया शुक्र मे संमुखसमुद्भवम् ॥
दोषं विनाशय क्षिप्रं रक्ष मां तेजसां निधे ॥ ७ ॥
इति प्रार्थ्य प्रयत्नेन प्रतिमा भूषणान्विता ॥

दवज्ञायैव दातव्या श्वेताश्वसहितेन च ॥ ८ ॥
शिष्टेभ्यो दक्षिणां दद्याद्यथावित्तानुसारतः ॥
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः ॥ ९ ॥
एवं यः कुरुते सम्यक्प्रतिशुक्रप्रपूजनम् ॥
न तस्य सम्मुखो दोषो विजयी चार्थवान्भवेत् ॥ ११० ॥
इतरेषां ग्रहाणां च पूजां कुर्यात्प्रयत्नतः ॥
तत्तत्संमुखजं दोषं तत्क्षणादेव नश्यति ॥ ११ ॥
सूर्याय कपिलां दद्याच्छंखं चंद्रमसेऽपि च ॥
कुजाय वृषभं दद्यात्स्वर्णं दद्या[illegible]धाय च ॥ १२ ॥
गुरवे पीतवस्त्रं च सिताय सितलाहकम् ॥
एवं प्रयत्नतः कृत्वा सर्वान्कामानवाप्स्यति ॥ १३ ॥
क्षुते मार्जारसमरे गृहदाहे ऋतौ स्त्रियः ॥
दुरुक्ते माहिषे युद्धे कुटुंबे कलहादिके ॥ १४ ॥
स्खलिते चांबरादीनां प्रत्याह्वाने च मैथुने ॥
वृषाश्वकुक्कुटादीनां युद्धे यात्रा त्वनिष्टदा ॥ १५ ॥
विविधानि निमित्तानि बहूनि शकुनानि च ॥
एतेषामधिका यातुर्मनःशुद्धिर्जयप्रदा ॥ १६ ॥
उद्वाहे व्रतबंधे च प्रतिष्ठायां महोत्सवे ॥
असमाप्ते न गंतव्यं मृतके सूतकेऽपि च ॥ १७ ॥
घृतान्नं कृशरान्नं च मत्स्यान्नं घृतपायसम् ॥
पूर्वादिषु क्रमाद्भुक्त्वा यात्रासिद्धिमवाप्नुयात् ॥ १८ ॥
मज्जिकां पायसं साज्यं कांजिकं पायसो दधि ॥
क्षीरं तिलोदनं भुक्त्वा रविवारादिषु व्रजेत् ॥ १९ ॥
कुल्मांषांश्च तिलांन्साज्यांस्तण्डुलांन्दधिं गोघृतम् ॥
पायसं मृगमांसं च तत्क्षीरघृतपायसम् ॥ १२० ॥

चणको मृगिणीमांसं शशमांसं च पौष्टिकम् ॥
प्रियंगुकमपूपं च मंडकान्कदलीफलम् ॥ २१ ॥
कूर्मश्वावित्ततो गोधांशालिनीवारकोदनम् ॥
कृशरान्नं मौद्गिकान्नं पायसान्नं मत्स्यभोजनम् ॥ २२ ॥
चित्रान्नं च सदध्यन्नमश्विभाश्च यथाक्रमात् ॥
भुक्त्वा सम्यग्व्रजेद्याता यात्राफलमवाप्स्यति ॥ २३ ॥
ग्रहयज्ञं ततः कृत्वा पूर्वोक्तविधिना ततः ॥
दिगीश्वराकृतिं कृत्वा सुवर्णेन स्वमंत्रकैः २४ ॥
स्वस्ववर्णैः सुगंधाद्यैर्दीपैर्धूपैर्मनोरमैः ॥
तद्वर्णवस्त्रैर्नैवेद्यैर्भक्त्या सम्यक् प्रपूजयेत् ॥ २५ ॥
ऐरावतस्थं देवेंद्रं वज्रपाणिं शचीपतिम् ॥
स्वर्णवर्णसहस्राक्षं दिव्याभरणभूषितम् ॥ २६ ॥
स्वाहाप्रियं मेषसंस्थं षडक्षं स्रुक्स्रुवायुधम् ॥
सप्तजिह्वं सप्तहस्तं रक्तवर्णं हुताशनम् ॥ २७ ॥
रक्तवर्णं श्यामलेशं यमं महिषवाहनम् ॥
दंडपाणिं लोहिताक्षं सर्वाभरणभूषितम् ॥ २८ ॥
दीर्घग्रीवापतिं नीलं निर्ऋतिं नरवाहनम् ॥
ऊर्ध्वकेशं विरूपाक्षं खड्गचर्मधरं प्रभुम् ॥ २९ ॥
वरुणं कालिकानाथमनर्घ्यमणिभूषितम् ॥
नागपाशधरं पीतवर्णं मकरवाहनम् ॥ १३० ॥
वायुं कृष्णमृगासीनमंजनीपतिमव्ययम् ॥
दंडपाणिं शुक्लवर्णं जंतूनामंतरात्मकम् ॥ ३१ ॥
अश्वारूढं कुंतपाणिं चित्ररेखापतिं प्रभुम् ॥
धनाधीशं स्वर्णवर्णं यक्षगंधर्वनायकम् ॥ ३२ ॥
गौरीपतिं चन्द्रमौलिं शुद्धस्फटिकसन्निभम् ॥

पिनाकिनं वृषारूढं सर्वाभरणभूषितम् ॥ ३३ ॥
तद्दिगीशं सुसंपूज्य तिलहोमं च कारयेत् ॥
दैवज्ञाय ततो दद्यात्प्रतिमां दक्षिणान्विताम् ॥ ३४ ॥
देवान्गुरून्पितॄन्विप्रान्स्वस्तिवाचनपूर्वकम् ॥
नत्वा तुष्टः प्रीतिमना व्रजेन्मंगलनिःस्वनैः ॥ ३५ ॥
तस्मिन्मुहूर्ते स्वयमप्रयाणे प्रयोजनापेक्षतया च दैवात् ॥
तत्रैव तन्निर्गमनं च कार्यं स्वात्मासमानं च यदुक्तभानम् ॥ ३६ ॥
श्वेतातपत्रध्वजचामराश्वविभूषणोष्णीषगजांबराणि ॥
आंदोलिकारत्नरथास्त्रशस्त्रशय्यासनाद्यं मनसस्त्वभीष्टम् ॥ ३७ ॥
कस्तूरिकागंधफलाक्षतौघकर्पूरताम्बूलसुभक्षणानि ॥
विचित्रपारावतपक्षिसंघं प्रचालयेद्वंधचयं प्रबंधम् ॥ ३८ ॥
विचित्ररम्याणि गृहाणि हेममयानि रौप्याणि घटानि यानि ॥
प्रचालयेद्वायकवाचकाख्यभिषग्ग्रहज्ञं च पुरोहितं च ॥ ३९ ॥
प्रस्थानं धनुषां पंचशतान्युत शतद्वयम् ॥
स्वदेवसदनाद्वद्वा दशभिः प्रस्थितो मतः ॥ १४० ॥
आरभ्य निर्गमाद्यायामात्क्षितिपो दशवासरान् ॥
मंडलीकः सप्तरात्रात्प्राकृतः पंचरात्रतः ॥ ४१ ॥
अत ऊर्ध्वं व्रजेद्भूयो भद्रे वा दिवसे नृपः ॥
राज्ञोऽन्यः प्राकृतो ज्ञेयो विप्रवैश्यादयो भुवि ॥ ४२ ॥
झपलग्ने झपांशे च पंथा वक्रश्च यायिनाम् ॥
जलराशौ जलांशे च जलयात्रार्थसिद्धिदा ॥ ४३ ॥
तनुरर्थाह्वयो धन्वी वाहनो मंत्रसंज्ञकः ॥
शत्रुमार्गस्तथायुश्च मनोव्यापारसंज्ञकः ॥ ४४ ॥
लाभश्च व्ययसंज्ञश्च तन्वादीनां च संज्ञकाः ॥
खेटे तन्वादिभावेषु ज्ञेयं यातुः फलं त्विदम् ॥ ४५ ॥

घ्नंति क्रूरास्त्रिषष्ठायभावान्हित्वा परान्सदा ॥
पुष्णंति सौम्यखचराः षष्ठाष्टांत्यविना परान् ॥ ४६ ॥
लग्ने षष्ठाष्टमं हंति चंद्रः शुक्रोऽस्तगः सदा ॥
मृत्युलग्नस्थितश्चंद्रो यातुर्मृत्युप्रदः सदा ॥ ४७ ॥
एवमुक्तप्रकारेण यात्रां नूनं करोति यः ॥
सर्वान्कामानवाप्नोति त्वरितन्तु न संशयः ॥ ४८ ॥
उक्त्वा साधारणां यात्रां युद्धयात्रां ब्रवीमि ताम् ॥
व्रजंति ये नृपाः सूक्ष्मलग्ने ते यायिनः सदा ॥ ४९ ॥
फलसिद्धिर्धिष्ण्यगुणैरग्रजानां भवेत्सदा ॥
योगलग्ने क्षितीशानां चौराणां शकुनैर्भृशम् ॥ १५० ॥
मुहूर्तशक्तितोऽन्येषां निमित्तैश्च फलोदयः ॥
तत्तदुक्तप्रकारेण तस्माद्यात्रां करिष्यति ॥ ५१ ॥
तिथिवारसनक्षत्रयोगेषु करणेषु च ॥
यात्रानुक्तेष्वथैतेषु चंद्रताराबलेऽपि च ॥ ५२ ॥
योगलग्नयुता राज्ञां यात्रा च विजयप्रदा ॥
विचित्रान्योगलग्नांस्तान्सम्यग्वक्ष्ये समासतः ॥ ५३ ॥
गुरौ वीर्ये केन्द्रगते बुधे वा भृगुनंदने ॥
विजयो नामयोगोऽयं यातुर्विजयदः सदा ॥ ५४ ॥
लक्षदोषान्बुधो हंति सितो लक्षद्वयं बली ॥
कोटिदोषान्गुरुर्हंति एको वा केंद्रगो यदि ॥ ५५ ॥
स्वराशिगे बुधे लग्ने सिते वा सुरवंदिते ॥
नद्यावर्ताह्वयो योगो यातुरिष्टार्थसिद्धिदः ॥ ५६ ॥
स्वांशसंस्थे बुधे लग्ने शुक्रे वा देवपूजिते ॥
शंखसंज्ञो महायोगो यातुः कीर्तिप्रदः सदा ॥ ५७ ॥
स्वराशिस्वांशगे सौम्ये लग्नस्थे वा भृगोः सुते ॥

जीवे वा पद्मयोगोऽयं यातुः कल्याणदः सदा ॥ ५८ ॥
अधिमित्रगृहस्थे ज्ञ लग्नगे वा भृगोः सुते ॥
जीवे वा वज्रयोगोऽयं यातुः शत्रुविनाशकृत् ॥ ५९ ॥
अधिमित्रांशगे सौम्ये सिते वाथसुरार्चिते ॥
लग्नगे मित्रयोगोऽयं शत्रूणां संधिकृत्सदा ॥ १६० ॥
अधिमित्रगृहे स्वाधिमित्रांशस्थे भृगोः सुते ॥
गुरौ चानंदयोगोऽयं सौम्ये चानन्ददः सदा ॥ ६१ ॥
स्वोच्चगे लग्नगे सौम्ये शुक्रे वा देवपूजिते ॥
अमृतो नामयोगोऽयं यातुरायुःप्रदः सदा ॥ ६२ ॥
उच्चगे लग्नसंस्थेषु बुधे वाऽथ गुरौ सिते ॥
शुभसंज्ञो महायोगो यायिनां शुभदः सदा ॥ ६३ ॥
स्वोच्चे स्वोच्चांशगे सौम्ये लग्नगे वा भृगोः सुते ॥
आये वा कीर्तियोगोऽयं यायिनां श्रीप्रदः सदा ॥ ६४ ॥
शुभग्रहे द्वये लग्नसंस्थे वा त्रितयेऽपि वा ॥
योगोऽतियोगसंज्ञोऽयं विजयोऽखिलभूप्रदः ॥ ६५ ॥
त्रिषष्ठलाभगेष्वेषु रविमंदकुजेषु च ॥
पूर्णचंद्रो महायोगः पूर्णराज्यप्रदः सदा ॥ ६६ ॥
यत्रैकादशगे चंद्रे भानौ वा प्रबले शुभे ॥
अभयो नाम योगोऽयं भवत्यरिविनाशकृत् ॥ ६७ ॥
त्रिकोणगे शुभे खेटे सुबले वा द्वितीयगे ॥
कल्याणसंज्ञो योगोऽयं यायिनां मंगलप्रदः ॥ ६८ ॥
यत्र स्वोच्चगते लग्ने लग्नादेकादशस्थिते ॥
जयंतनामयोगोऽयं शत्रुपक्षविनाशकृत् ॥ ६९ ॥
वर्गोत्तमगते लग्ने शुभे वा प्रबलान्विते ॥
सिद्धिसंज्ञो महायोगो यायिनां कार्य्यसिद्धिदः ॥ १७० ॥

लग्ने गुरौ विधौ खस्थे शनौ षष्ठेऽथवा रवौ ॥
पद्मयोगः शत्रुपक्षक्षयकारी रणे सदा ॥ ७१ ॥
गुरौ कण्टकगे लग्ने भानावेकादशास्थिते ॥
पुंडरीको महायोगः शत्रुपक्षविनाशकृत् ॥ ७२ ॥
चंद्रे लाभस्थिते सौम्ये लग्नगे वज्रसंज्ञकः ॥
योगो वज्रनिभो युद्धे यातॄणामिष्टसिद्धिदः ॥ ७३ ॥
वृषराशिगते चन्द्रे लाभगे केंद्रगे गुरौ ॥
कामधेनुरयं योगः कामदो यायिनां रणे ॥ ७४ ॥
सिते केंद्रगते सूर्ये लाभगे घोरसंज्ञकः ॥
योगस्तद्वद्रणे शत्रुपक्षच्छेदकरस्तथा ॥ ७५ ॥
लग्ने सौम्ये रवौ षष्ठे लाभगे देवपूजिते ॥
महापाशुपतो योगः शत्रुवर्गविनाशकृत् ॥ ७६ ॥
स्वराशिसंस्थिते शुक्रे लग्नगे लाभगे विधौ ॥
ललाटलोचनं शंभोस्तद्वद्दहत्यरीनलम् ॥ ७७ ॥
उच्चस्थे लाभगे शुक्रे त्रिषष्ठेषु शुभग्रहे ॥
सुदर्शनो महायोगः शत्रुध्वंसकरो रणे ॥ ७८ ॥
शुभद्वयांतरगते चंद्रे शुक्रेऽथवा गुरौ ॥
लग्नगे चक्रयोगोऽयं शत्रुसंघविनाशकृत् ॥ ७९ ॥
लग्नात्केंद्रगते चंद्रे लग्नस्थे देवपूजिते ॥
महाशंखाह्वयो योगः शत्रुसंघं निहंत्यलम् ॥ १८० ॥
केन्द्रत्रिकोणगे जीवे लाभगे स्वोच्चगे यमे ॥
कौस्तुभो नामयोगोऽयं रणे शत्रुनिबर्हणः ॥ ८१ ॥
त्रिधनायत्रिकोणस्थे जीवे वा भृगुनंदने ॥
वर्द्धमानाह्वयो योगः प्रतिपक्षापनोदनः ॥ ८२ ॥

---

१ कौशिको नामयोगोऽयमिति क्वचित्पाठः ।

भूसुते स्वोच्चगे लाभे मृगकुंभगते यमे ॥
नद्यावर्त्ताह्वयो योगः शत्रुतूलानिलो रणे ॥ ८३ ॥
मेषगे भास्करे षष्ठे लाभगे स्वोच्चगे यमे ॥
नक्षत्रपदयोगोऽयं शत्रुमेघानिलो रणे ॥ ८४ ॥
भौमे स्वराशिगे लग्ने सौम्ये केन्द्रत्रिकोणगे ॥
पुष्पयोगो रिपुवने कुठारः संगरांगणे ॥ ८५ ॥
चतुष्टयगते सौम्ये स्वतुंगे वा स्ववर्गगे ॥
रत्नयोगः शत्रुवनं महादावानलः स्वयम् ॥ ८६ ॥
मित्रवर्गगते सौम्ये केंद्रवर्गगतेऽपि वा ॥
कल्याणयोगो वैपक्षलाक्षारसहुताशनः ॥ ८७ ॥
शुभग्रहेषु केन्द्रेषु पापेषु त्रिभवारिषु ॥
कुमुदो नामयोगोऽयं शत्रुद्विरदकेसरी ॥ ८८ ॥
पूर्वार्द्धगेषु सौम्येषु पापेष्विदावुपांत्यगे ॥
चक्राख्ययोगः सापत्न्यत्रिपुराणां त्रिलोचनः ॥ ८९ ॥
परार्द्धगेषु सौम्येषु पापेष्विदौ भवस्थिते ॥
शूलयोगस्त्वरिव्रातपूतनाकेशवः स्वयम् ॥ १९० ॥
एकांतरगते लग्नाच्छुभखेटेऽथवा शुभे ॥
वापीयोगस्त्वरिव्राततिमिरौघदिवाकरः ॥ ९१ ॥
व्यन्तरांतरिते सौम्ये पापे वा यदि लग्नतः ॥
वल्लकीयोगसंज्ञोऽयं विपक्षपुरपावकः ॥ ९२ ॥
अंतरांतरिते सौम्ये पापे वा हिमदीधितौ ॥
लाभगे चापयोगोऽयं शत्रुभोगी भुजंगभुक् ॥ ९३ ॥
चंद्रेऽप्येकादशे संस्थे येषु केषु परेषु च ॥
मुशलो नाम योगोऽयं शत्रुदैत्यौघराघवः ॥ ९४ ॥
सौम्ये लग्नगते चंद्रे [illegible] शनौ ॥

अन्यस्थानेषु सर्वेषु शत्रुपक्षाशनिः स्वयम् ॥ ९५ ॥
चरराशिषु संस्थेषु निखिलेषु ग्रहेषु च ॥
लग्ने च रज्जुयोगोऽयं शत्रूणामशनिः स्वयम् ॥ ९६ ॥
स्थिरराशिषु संस्थेषु खचरेष्वखिलेष्वपि ॥
लग्ने वाऽनलयोगोऽयं प्रतिपक्षकुलांतकः ॥ ९७ ॥
द्विस्वभावेषु सर्वेषु ग्रहेष्विंदौ विलग्नगे ॥
संवर्त्तयोगः सापत्न्यगोवृंदे द्वीपिविक्रमः ॥ ९८ ॥
लग्ने चंद्रे च चरमे खेटेषु स्थिरभेषु च ॥
यमदंडो महायोगो नीयतेऽरीन्यमालयम् ॥ ९९ ॥
चरराशौ लग्नगते ग्रहेषु स्थिरभेषु च ॥
ब्रह्मदंडो महायोगः शत्रुप्राणापहारकः ॥ २०० ॥
स्थिरराशौ लग्नगते ग्रहेषु चरभेषु च ॥
योगः संजीविनी ज्ञेयो विपक्षांधकशूलभृत् ॥ १ ॥
स्थिरभेषु च पापेषु चरभेष्वितरेषु च ॥
द्विस्वभावे लग्नगते योगः शत्रुविनाशकृत् ॥ २ ॥
केन्द्रद्वितिययोः सौम्येष्वितरेषु स्थिरेषु च ॥
केदारयोगः सापत्न्यमेघसंघवृकः स्वयम् ॥ ३ ॥
केन्द्रद्वित्रिषु सर्वेषु सत्सु खेटेषु यत्र वै ॥
वीणायोगस्त्वरिव्रातमृत्युकेतू रणांगणे ॥ ४ ॥
त्रिषष्ठगेषु पापेषु लाभगौ जीवभार्गवौ ॥
सिद्धियोगः सपत्नौघमूपकानां च जाहकः ॥ ५ ॥
सहजैकादशे पापे केंद्रगेष्वितरेषु च ॥
कुंभयोगस्त्वरिव्रातताकासुरषण्मुखः ॥ ६ ॥
केंद्रद्वयेषु सौम्येषु चान्येष्वापोक्लिमेषु च ॥

१ द्वीपिरुद्धतः इति क्वचित्पुस्तके पाठः ।

अरविंदो महायोगस्त्वरिसंघाहिनाकुलः ॥ ७ ॥
दशमस्थे शुभे लाभे चंद्रेऽन्येषु च बंधुषु ॥
गोत्रयोगः शत्रुपक्षगोत्राणां गोत्रभित्स्वयम् ॥ ८ ॥
तन्वंत्यगेषु सौम्येषु परेष्वरिभवेषु च ॥
जीमूतयोगो वैपक्षपावको सप्तसागराः ॥ ९ ॥
सौम्येष्वाद्यंतकेंद्रेषु परेष्वायधनत्रिषु ॥
प्रभंजनो महायोगः शत्रुपादपभंजनः ॥ २१० ॥
धर्मायगेषु पापेषु त्रिबंधुष्वपरेषु च ॥
क्रकचो नामयोगोऽयं शत्रुमस्तकभेदकृत् ॥ ११ ॥
त्रिकोणांत्येषु सौम्येषु त्रिषष्ठेषु परेषु च ॥
दंशयोगः शत्रुजिह्वोत्पाटने दीर्घदंशनः ॥ १२ ॥
भवरिष्फेषु सौम्येषु त्रिबंधुषु परेषु च ॥
सृणियोगः शत्रुपक्षमत्तेभेंद्रसृणिः स्वयम् ॥ १३ ॥
शुभेनैकेन योगः स्यात्केंद्रधर्मात्मजेषु च ॥
तस्मिन्यातुरतिक्षेमं गमनागमनं सदा ॥ १४ ॥
त्रिकोणकेंद्रसंस्थाभ्यां शुभाभ्यां मतिसंज्ञकः ॥
योगस्तस्मिन्सदा याता जित्वा शत्रून्रणांगणे ॥ १५ ॥
योगातियोगः केन्द्रांकसुतस्थाः शुभखेचराः ॥
याता शत्रून्निहंत्याजौ सप्तांगेन समागतः ॥ १६ ॥
जन्मभे जन्मलग्ने वा तयोरीशे विलग्नगे ॥
ताभ्यां केंद्रत्रिषष्ठे वा यातुः शत्रुक्षयस्तदा ॥ १७ ॥
शत्रोरष्टमलग्ने वा राशौ वा यदि लग्नगे ॥
तदीशस्थितलग्ने वा यातुः शत्रुक्षयस्तदा ॥ १८ ॥
लग्नकेंद्रे जन्मपतौ धनायस्थैः परैर्ग्रहैः ॥
गतो राजा त्वरैः सेनां नीयते यममंदिरम् ॥ १९ ॥

शुक्रे केंद्रे लग्नसंस्थे चंद्रे बंधुस्थिते यदा ॥
गतो राजा रिपून्हंति केशवो दनुजानिव ॥ २२० ॥
षष्ठाष्टमेषु पापेषु लग्नेष्वन्येषु तत्र तु ॥
गतस्य रिपुसेनेयं तमुपेत्याभिसारिका ॥ २१ ॥
लग्ने सौम्येऽष्टमे चंद्रे लाभगेषु परेषु च ॥
गतस्याग्रे वैरिचमूः खलमैत्रीव न स्थिरा ॥ २२ ॥
यमे तृतीयगे लाभे कुजे चंद्रे शुभस्थिते ॥
गतस्य शत्रुधरणी हस्तस्था निखिला तदा ॥ २३ ॥
दिग्राशिलग्नगे जीवे शुक्रे वाप्यथवा बुधे ॥
दहत्यरीन्गतो राजा कृष्णवर्त्मा यथेंधनम् ॥ २४ ॥
धिष्ण्ये चोपकुले लग्ने शुभे लाभस्थिते शनौ ॥
शुष्यत्यरीन्गतो राजा त्वर्करश्मिर्यथा ह्रदम् ॥२५ ॥
दिग्वर्गराशिलग्नस्थे दिगीशे वा भवस्थिते ॥
गतो राजा रिपून्हंति पापं यद्वद्धरेः स्मृतिः ॥ २६ ॥
इंदौ स्वक्षेत्रगे लाभे स्वोच्चगे लग्नगे बुधे ॥
गतो राजा रिपून्हंति पापं पंचाक्षरी यथा ॥ २७ ॥
स्वाधिमित्रगते सौम्ये लग्नस्थे वा भवान्विते ॥
गतो राजा रिपून्हंति कर्म ज्ञानोदयो यथा ॥ २८ ॥
एकस्मिन्नेव मित्रर्क्षे स्वोच्चगे लग्नगे गुरौ ॥
गतो राजा रिपून्हंति पापं भागीरथी यथा ॥ २९ ॥
विगजतुरगभीतान्पुण्यलोकाभिलाषी ।
विरथशिथिलवस्त्रान्मुक्तशस्त्रास्त्रकेशान् ॥
तृणमुखगतसत्वान्प्रांजलीन्युद्ध्यमानः ।
क्षितिपतिरिति वीरान्युद्धभूमौ न हन्यात् ॥ २३० ॥
सपत्नदेशान्नगरं प्रविश्य महीपतिर्देवगुरुद्विजार्थे ॥

कुर्यान्न वाञ्छा न कुलांगनासु प्राणाभिलाषी न कदाचिदेव ॥ ३१
सापत्नसप्तांगसमस्तवीरलक्ष्मीं गृहीत्वा निखिलप्रजानाम् ॥
दत्त्वाऽभयं पूर्ववदेव सर्वं संस्थाप्य लग्ने स्वपुरीं विशेच्च ॥ ३२ ॥
तस्माद्विवाहे यात्रायामाधाने जातकेऽपि वा ॥
ग्रहयोगात्फलं वाच्यं शेषमन्यद्धि निष्फलम् ॥ २३३ ॥
इति श्रीमहर्षिवृद्धवसिष्ठविर० संहितायां यात्राध्यायः सप्तत्रिंशः ॥ ३७ ॥

---

## अथ गृहप्रवेशाध्यायः ३८ ।

अथ प्रवेशो नवसद्मनश्च सौम्यायने जीवसिते बलाढ्ये ॥
सिते च पक्षे शुभवासरे च वास्त्वर्चनं भूतबलिं च कृत्वा ॥ १ ॥
नवप्रवेशेऽप्यथ कालशुद्धिर्न द्वंद्वसौपूर्वकयोः कदाचित् ॥
प्रवेशपंचांगदिने सुलग्ने वास्त्वर्चनं पूर्ववदत्र कार्य्यम् ॥ २ ॥
अपूर्वसंज्ञः प्रथमप्रवेशो यात्रावसाने च सुपूर्वसंज्ञः ॥
द्वंद्वाह्वयस्त्वग्निभयादिजातस्त्वेवं प्रवेशो त्रिविधः प्रदिष्टः ॥ ३ ॥
दिवा प्रवेशः शुभदः सुपुत्रपौत्राभिवृद्धिं निशि भास्करेन्दोः ॥
बलेन मध्येंदुजवासरस्य रात्रिं विना पूर्वतिथेश्च रात्रिं ॥ ४ ॥
दह्यते प्रविशतां च मंदिरं वह्निभे नियतमेव वह्निना ॥
अथभूमिसुतवासरे तथा शीतरश्मिदिवसे च वृद्धिम् ॥ ५ ॥
चंद्रजार्य्यसितवासरेषु तु श्रीकरं सुतमहार्थलाभदम् ॥
सूर्यसूनुदिवसे स्थिरप्रदं किंतु चोरभयमत्र विद्यते ॥ ६ ॥
रिक्तामर्मा दग्धतिथिं दिनेशभूसूनुपङ्गंमिनेंदुदृष्टिम् ॥
क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे ॥ ७ ॥
माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च ॥
चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः ॥ ८ ॥
ज्येष्ठेषु मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च ॥

शुक्ले च पक्षे सुतरां प्रवृद्ध्यै कृष्णे च यावद्दशमी च तावत् ॥ ९ ॥
चित्रोत्तराधातृशशांकमित्रवस्वंत्यवारीश्वरभेषु नूनम् ॥
आयुर्धनारोग्यसुपुत्रपौत्रसुकीर्तिदः स्यात्त्रिविधः प्रवेशः ॥ १० ॥
अर्कानिलार्यादितिदस्रविष्णुऋक्षे प्रविष्टं नवमंदिरं यत् ॥
अब्दत्रयात्तत्परहस्तया तं शेषेषु धिष्ण्येषु च मृत्युदं स्यात् ॥ ११ ॥
पंचांगसंशुद्धदिने निशीशताराबले चाष्टकवर्गयुक्ते ॥
सौम्ये स्थिरे भे शुभदृष्टियुक्ते लग्नेऽथवा द्व्यंगगृहे विलग्ने ॥ १२ ॥
न नैधनेभेऽपि न चाष्टलग्ने पंचेष्टिकेऽप्यष्टमशुद्धियुक्ते ॥
कार्यः प्रवेशो न चरांशलग्ने शुभेक्षिते वाप्यऽथ संयुते वा ॥ १३ ॥
कर्तुर्विलग्नाच्च हि जन्मराशेर्लग्नस्थितो राशिरिति प्रदिष्टः ॥
निर्व्याधिदारिद्र्यचयशस्करश्च सुहृत्सुतघ्नो रिपुनाशदः सः ॥ १४ ॥
कलत्रहंता निधनप्रदश्च रोगप्रदः सिद्धिकरोऽर्थदश्च ॥
क्रमाच्च वैरी भयदः प्रवेशो सदैव नूनं त्रिविधे विचिंत्यम् ॥ १५ ॥
केंद्रत्रिकोणत्रिधनायसंस्थैः शुभैस्त्रिषष्ठाऽयगतैः खलैश्च ॥
लग्नांत्यषष्ठाष्टमवर्जितेन चंद्रेण लक्ष्मीनिलयः प्रवेशः ॥ १६ ॥
यद्दिग्द्वारं मंदिरं तद्दिगृक्षैरुक्तर्क्षैः स्यात्सन्निवेशो न सर्वैः ॥
पुष्यो मध्यः सन्निवेशेऽप्युडूनां वाराणां स्यात्सूर्यसूनोश्च वारः ॥ १७ ॥
मृगादिषड्राशिषु संस्थितेऽर्के नवप्रवेशः शुभदः सदैव ॥
कुंभं विनान्येष्वपि केचिदूचुर्न सौरमिष्टं खलु सन्निवेशे ॥ १८ ॥
प्रवेशलग्नान्निधनस्थितो यः क्रूरग्रहः क्रूरगृहे यदि स्यात् ॥
प्रवेशकर्त्तारमथ त्रिवर्षाद्धंत्यष्टवर्षैः शुभराशिगश्चेत् ॥ १९ ॥
यः क्षीणचंद्रोऽत्यषडष्टसंस्थः पापेक्षितः पापयुतोऽथवा स्यात् ॥
कर्तुः स्त्रियं हंति स वत्सरेण त्रिवर्षतः सौम्यनिरीक्षितश्चेत् ॥ २० ॥
एको ग्रहेंद्रः परभागवर्त्ती जायास्थितः कर्मगतोऽथ वा स्यात् ॥
प्रविष्टगेहं परहस्तयातं करोति वर्षाद्बलिः स खेटः ॥ २१ ॥

गजाश्वशालादिषु सन्निवेशस्त्वेवं पशूनां पशुयोनिराशौ ॥
शुभग्रहैर्युक्तिनिरीक्षिते च प्रवेशतः शोभनमामनंति ॥ २२ ॥
यद्वास्तुपूजारहितं तदत्र वलिं विना छन्नगहं विरूपम् ॥
कपाटहीनं न विशेद्यतस्तत्सर्वापदामालयमेतदेव ॥ २३ ॥
कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं विप्रान्पूज्यानग्रतः पूर्णकुंभम् ॥
हर्म्यं रम्यं तोरणैः स्रग्वितानैः स्त्रीभिः स्रवी गीतवाद्यैर्विशेत्तत् ॥ २४ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां गृहप्रवेशाध्यायोऽष्टात्रिंशः ॥३८॥

## अथ वास्त्वध्यायः ३९ ।

वास्तुज्ञानं प्रवक्ष्यामि यदुक्तं ब्रह्मणा पुरा ॥
ग्रामसद्मपुरादीनां निर्माणं सूक्ष्मतोऽधुना ॥ १ ॥
क्षेत्रमादौ परीक्षेत गंधवर्णरसादिना ॥
श्वेतस्थानं द्विजातीनामीपद्रक्तं महिभुजाम् ॥ २ ॥
विशां पीतं चतुर्थानां कृष्णवर्णं शुभप्रदम् ॥
मधुपुष्पाम्लपिशितं गंधवर्णानुरूपतः ॥ ३ ॥
मधुरं कटुकं त्वम्लं तिक्तं तत्क्रमशो रसम् ॥
खातं कृत्वारत्निमात्रं खनयेत्तत्समंततः ॥ ४ ॥
रात्रादौ तज्जलैः पूर्यं प्रातः सम्यङ्निरीक्षयेत् ॥
जलयुक्तं वृद्धिकरं पंकयुक्तं तु मध्यमम् ॥ ५ ॥
व्रणयुक्ते भवेद्धानिः शुष्के मृत्युं समादिशेत् ॥
तथैव तन्मृदं कृत्वा तद्गतं परिपूरयेत् ॥ ६ ॥
अधिके वृद्धिमाप्नोति समे साम्यं क्षये क्षयम् ॥
प्रागुत्तरप्लवं वृद्धिरैशान्यं प्लवमिष्टदम् ॥ ७ ॥
कीलकेशास्थिशुद्ध्यर्थं पुरुषत्रयमानतः ॥
खनित्वा पूरयेत्तं च पाषाणसिकतांबुभिः ॥ ८ ॥
एवं परीक्षितं क्षेत्रं कृत्वा दिक्साधनं ततः ॥

सलिलेन समीकृत्य त्वथवापि शिलातले ॥ ९ ॥
शंकुमानेन सूत्रेण लिखेद्वृत्तं समस्थले ॥
आद्वादशांगुलं शंकुं वृत्तमध्ये समं न्यसेत् ॥ १० ॥
तच्छायाग्रं यत्र वृत्ते स्पृशेत्पूर्वापराह्णयोः ॥
कार्यौ बिन्दू तत्र वृत्ते यत्र पूर्वापराभिधे ॥ ११ ॥
तयोर्मध्ये हि मत्स्येन रेखा स्याद्दक्षिणोत्तरा ॥
दक्षिणोत्तरदिङ्मध्ये मत्स्येनापरपूर्विका ॥ १२ ॥
दिङ्मध्योद्भवमत्स्यो च विदिशश्चोपदेशतः ॥
चतुरस्रं बहिश्चात्र मृडा ज्योतिपिका भुवि ॥ १३ ॥
अल्पाधिकं चतुरस्रं कार्य्यं षड्वर्गशुद्धितः ॥
चतुरस्रेण मार्गेण प्राकारं कल्पयेद्भुवि ॥ १४ ॥
द्वारमायामतः कार्यं पुत्रपौत्रधनप्रदम् ॥
विस्तारकोणद्वारं यद्दुःखशोकभयप्रदम् ॥ १५ ॥
तस्मात्कृत्वाऽष्टधा यामं दिक्षुद्वारेषु सत्स्वपि ॥
प्रादक्षिण्यात्फलान्यष्टावेकैकस्यामिति क्रमात् ॥ १६ ॥
दुःखशोकौ धनप्राप्तिर्नृपपूजा महद्धनम् ॥
स्त्रीजन्म पुत्रता हानिः प्राचीद्वारफलानि वै॥ १७ ॥
निधनं बंधनं भीतिः पुत्रावाप्तिर्धनागमः ॥
यशोलाभश्चोरभयं व्याधिर्भीतिश्च दक्षिणे ॥ १८ ॥
शत्रुवृद्धिः पुत्रहानिर्लक्ष्मीप्राप्तिर्धनागमः ॥
सौभाग्यं धनलाभश्च दुःखं शोकश्च पश्चिमे ॥ १९ ॥
निःस्वं स्त्रीदूषणं हानिः संपत्प्राप्तिः सुखागमः ॥
दुःखागमः शत्रुबाधा चोत्तरस्यां दिशि क्रमात् ॥ २० ॥
विस्ताराद्द्विगुणोत्सेधं द्वारं तद्द्विपमायतम् ॥
पश्चिमे दक्षिणे चापि कपाटं च शुभप्रदम् ॥ २१ ॥

एकाशीतिपदं कुर्य्यात्प्राकाराधिष्ठितां क्षितिम् ॥
मध्येन च पदं ब्रह्मस्थानं तन्निधनप्रदम् ॥ २२ ॥
द्वात्रिंशदंशा पैशाच्याः प्राकाराय समीपगाः ॥
एतेषु गृहनिर्माणं शोकरोगभयप्रदम् ॥ २३ ॥
दिग्विदिक्षु स्थिता रेखा शिराः स्युर्वास्तुनः सदा ॥
ब्रह्ममार्गपिशाचांशशिराणां पुत्रसंधुतिः ॥ २४ ॥
मर्माणि संधयो ज्ञेया वास्तुनस्तत्रतत्र तु ॥
मर्मसंधिषु कालेषु कुड्यपादं न कारयेत् ॥ २५ ॥
शेषस्थानेषु निर्माणं पुत्रपौत्रप्रवर्द्धनम् ॥
स्वे स्वे निवेशनेऽप्येवमेतत्सर्वं विचिंतयेत् ॥ २६ ॥
पितृमूलेज्यभाग्यार्कपौष्णभेषु च यत्कृतम् ॥
कुजेन सहितेष्वेवं गृहं तदह्यतेऽग्निना ॥ २७ ॥
अग्निनक्षत्रगे सूर्य्ये चंद्रे वा संस्थिते यदि ॥
निर्मितं मंदिरं नूनमग्निना दह्यतेऽचिरात् ॥ २८ ॥
अजपाद्वितये याम्यमित्रेंद्रानिलभेषु च ॥
यत्कृतं शनिसंयुक्तं गृह्यते यक्षराक्षसैः ॥ २९ ॥
परवर्गगतस्त्वेकः खस्थो वा द्यूनगो ग्रहः ॥
परहस्तगतं गेहं करोति स्वगृहेड्बली ॥ ३० ॥
नीचशत्रुगते जीवे शुक्रे वा ज्ञेऽथवा रवौ ॥
निर्मितं सदनं शश्वदतिनिस्वत्वतां गतम् ॥ ३१ ॥
इज्योत्तरात्रयाहीन्दुविष्णुधातृजलोडुषु ॥
गुरुणा सहितेष्वेषु कृतं गेहं श्रियायुतम् ॥ ३२ ॥
द्विदैवत्वाष्ट्रवारीशरुद्रादितिवसूडुषु ॥
शुक्रेण सहितेष्वेषु कृतं धान्यप्रदं गृहम् ॥ ३३ ॥
हस्तार्यमभत्वाष्ट्रदस्रचतुरास्येन्दुभेषु च ॥

बुधेन सहितेष्वेषु धनपुत्रसुखप्रदम् ॥ ३४ ॥
गुरौ सिते वा सौम्ये वा गृहनिर्माणलग्नगे ॥
तद्वर्गे वा कृतं गेहं धनधान्यसुखप्रदम् ॥ ३५ ॥
स्वतुंगगे गुरौ शुक्रे बुधे वा यदि लग्नगे ॥
तद्वर्गे वा कृतं गेहं सर्वसंपत्प्रदं सदा ॥ ३६ ॥
यत्रैकादशगे सौम्ये खेटे चंद्रेऽथवा रवौ ॥
अशत्रुनीचराशौ चेत्तद्गृहं भूरिधान्यदम् ॥ ३७ ॥
शुभकेंद्रत्रिकोणस्थे शत्रुनीचांशवर्जिते ॥
सदा लाभप्रदं गेहमुच्चस्थं भूरिधान्यदम् ॥ ३८ ॥
शुभद्वये त्रये वापि यस्मिन्निर्माणलग्नगे ॥
बहुकालस्थितं गेहं पुत्रपौत्रधनप्रदम् ॥ ३९ ॥
स्थिरराशिगते सूर्ये चरराशिगतेऽपि वा ॥
गृहारंभः सदा कार्यो न कार्यो द्विस्वभावगे ॥ ४० ॥
मासे तपस्ये तपसि माधवे नभसि त्विषे ॥
ऊर्जे च गृहनिर्माणं पुत्रपौत्रप्रवर्द्धनम् ॥ ४१ ॥
गीर्वाणपूर्वगीर्वाणमंत्रिणोर्दृश्यमानयोः ॥
शुक्लपक्षे दिवा कार्यं न निर्माणं चं रात्रिषु ॥ ४२ ॥
अकारादिषु वर्गेषु दिक्ष्वष्टसु यथाक्रमम् ॥
गृध्रमार्जारसिंहश्वसर्पाखुगजशाशकाः ॥ ४३ ॥
दिग्वर्गाणामियं योनिः स्ववर्गात्पंचमो रिपुः ॥
रिपुवर्गं परित्यज्य शेषवर्गः शुभप्रदः ॥ ४४ ॥
साध्यवर्गं पुरः स्थाप्य पृष्ठतः साधकस्य च ॥
विभजेदष्टभिः शेषं साधकस्य धनं स्मृतम् ॥ ४५ ॥
व्यत्ययेनागतं शेषं साधकस्य ऋणं स्मृतम् ॥
धनाधिकं ऋणं स्वल्पं सर्वसंपत्प्रदं स्मृतम् ॥ ४६ ॥

विस्तारायामगुणितं गृहस्य पदमुच्यते ॥
तस्माद्धनऋणान्यर्क्षवासराख्यनवांशकाः ॥ ४७ ॥
गृहस्यागतभं यत्र तद्धि राश्यात्मकं यदि ॥
तन्नवांशवशात्तत्र ज्ञातव्यं सर्वदा गृहे ॥ ४८ ॥
गजरामांकर्वस्वंकऋतुभिर्गुणितात्पदात् ॥
सूर्याष्टाष्टर्क्षशैलांकविभक्तादवशिष्टकाः ॥ ४९ ॥
संपूर्णा शुभदास्त्वेते त्वसंपूर्णास्त्वनिष्टदाः ॥
धनादिकं गृहं वृद्ध्यै निधनाय ऋणाधिकम् ॥ ५० ॥
विषमाय शुभायैव समायः शोकदुःखदः ॥
गृहस्य तत्पतेस्त्वेकाधिष्ण्यं च निधनप्रदम् ॥ ५१ ॥
विपत्प्रदा विपत्तारा प्रत्यरा प्रतिकूलदा ॥
निधनाख्या तारका या सर्वदा निधनप्रदा ॥ ५२ ॥
विवर्ज्यास्तारकास्त्वेता निर्माणं शोभनप्रदम् ॥
कुर्वन्नज्ञानतो मूढो दुःखभाग्व्याधिभाग्यदि ॥ ५३ ॥
राशिकूटादिकं सर्वं दंपत्योरिव चिंतयेत् ॥
वैनाशिकादिऋक्षं यद्वर्जयेत्सर्वदा गृहे ॥ ५४ ॥
निःस्वं द्विर्द्वादशे नूनं त्रिकोणे त्वनपत्यता ॥
षष्ठाष्टके नैधनं स्याद्व्यत्यये नैधनं फलम् ॥ ५५ ॥
परेषु शुभदं गेहं सर्वं तत्कर्तृराशितः ॥
सूर्यारवारराश्यंशाः सदा वह्निभयप्रदाः ॥ ५६ ॥
शेषा ग्रहाणां राश्यंशाः कर्तुरिष्टार्थसिद्धिदाः ॥
तस्मात्सर्वं परीक्ष्यैतद्वदेज्ज्योतिषिकः सदा ॥ ५७॥
गृहात्मको वास्तुपुरुषस्त्रिनेत्रः स्वेदसंभवः ॥
पूर्वादिदिक्छिरोवामपार्श्वशायी प्रदक्षिणम् ॥ ५८ ॥

चरवास्तु चरत्येवं पूजनीयो गृहाधिपैः ॥
त्रिषु त्रिषु च मासेषु नभस्यादिषु च क्रमात् ॥ ५९ ॥
यद्दिङ्मुखो वास्तुपुरुषः सदनं तन्मुखं शुभम् ॥
अन्यदिग्वक्रगेहं तु दुःखशोकभयावहम् ॥ ६० ॥
चतुर्दिक्ष्वादिशालानामेषदोषो न विद्यते ॥
प्रधानसदनं वीक्ष्य शंकुं तत्रैव विन्यसेत् ॥ ६१ ॥
अनुकूले ग्रहे वाऽपि वास्तुं तत्र च विन्यसेत् ॥
चतुःशालादिषु त्वेवं स्थापयेच्छंकुमुत्तमम् ॥ ६२ ॥
धान्यरत्नस्वर्णयुतां मृन्मयां स्फाटिकां शुभाम् ॥
गृहमध्ये हस्तमात्रे गर्ते न्यासाय विन्यसेत् ॥ ६३ ॥
वास्त्वायामदलं नाभिस्तस्माद्व्यंगुलत्रयम् ॥
कुक्षिस्तस्मिन्न्यसेच्छंकुं पुत्रपौत्रधनप्रदम् ॥ ६४ ॥
वितस्तिमात्रं शंकुः स्यात्सर्वेषां सर्वदा शुभम् ॥
गंधपुष्पांबरस्वर्णधूपदीपैरलंकृतम् ॥ ६५ ॥
रक्तचंदनबिल्वाम्रखदिरार्जुनवैणवम् ॥
नीपकारंजकुटजसालनिंबतरूद्भवम् ॥ ६६ ॥
युग्मपत्रं महापत्रं गोरत्वक्कपजापकम् ॥
रक्तसारविशालत्वक्चंदनागुरुसंभवम् ॥ ६७ ॥
शंकुं त्रिधा विभज्याद्यं चतुरस्रं द्वितीयकम् ॥
अष्टास्रकं तृतीयांशं लिंगाकारमृजुं शुभम् ॥ ६८ ॥
मृदुध्रुवक्षिप्रभेषु रिक्तामावर्जितेषु च ॥
व्यर्कारवारलग्नेषु क्रूरे चाष्टमवर्जिते ॥ ६९ ॥
न नैधनोदये कर्तुरष्टमे शुद्धिसंयुते ॥
स्थिरोदये स्थिरांशे च ग्रहज्ञार्चनपूर्वकम् ॥ ७० ॥
शुभवारे शुभांशे च महादोषविवर्जिते ॥

पुण्याहघोषैर्वादित्रैर्विप्राशीर्वचनैः सदा ॥ ७१ ॥
त्रिकोणकेंद्रस्वन्यायशुभैः षट्त्र्यायगैः परैः ॥
आलग्नांत्यारि चंद्रेण स्थापयेच्छंकुमुत्तमम् ॥ ७२ ॥
शुभैर्यात्रोक्तशकुनैर्निमित्तैर्मंगलस्वनैः ॥
षड्वर्गशुद्धिसूत्रेण सूत्रिते धरणीतले ॥ ७३ ॥
सूत्रिते समये तस्मिन्सूत्रं केनापि लंघितम् ॥
तदाऽस्थि तत्र जानीयात्पुरुषस्य प्रमाणतः ॥ ७४ ॥
(स्वयोनित्वं तथा तारा व्ययोऽथ भवनांशकम् ॥
आयोऽथ गृहनामानि करणानि षडेवहि ॥
गृहस्यैतानि चिन्त्यानि प्रयत्नेन च धीमता ॥ )
अभ्यक्तो दृश्यते यस्यां दिशि शल्यं समादिशेत् ॥
तस्यामेव तदास्थीनि सप्तत्यंगुलमानतः ॥ ७५ ॥
सूत्रिते समये यत्र स्वसप्तोपरि संस्थितः ॥
तदाऽस्थि तत्र जानीयात्पष्ठ्यंगुलमिते क्षितौ ॥ ७६ ॥
उच्चादेवागते तस्मिन्समये यत्र संस्थिते ॥
तदाऽस्थि तत्र जानीयाद्धस्तद्वयमिते क्षितौ ॥ ७७ ॥
चांडाले जटिले वापि तदा यस्यां दिशि स्थिते ॥
तदास्थि तत्र जानीयादशीत्यंगुलमानतः ॥ ७८ ॥
नृगजाश्वपशूनां हि त्वेकस्मिन्यत्र संस्थितिः ॥
सदास्थि तत्र जानीयाद्धस्तत्रयमिते क्षितौ ॥ ७९ ॥
तस्मिन्नवसरे यत्र गृहदाहो भवेद्यदि ॥
मेषाऽस्थि तत्र जानीयात्पुरुषस्य प्रमाणतः ॥ ८० ॥
सूत्रे विसूत्रिते तस्मिन् भिन्ने कुंभेऽथवा यदि ॥
आदिशेन्निधनं तत्र दंपत्योः क्रमशस्तदा ॥ ८१ ॥

इति निमित्तशल्यम् ।

१ क्वचित्पुस्तके कोष्ठान्तर्गतश्लोकोऽप्युपलभ्यते ॥

षट्पदाळ्यमादित्यस्यायस्कारगृहं शशी ॥
कुजस्थानानि शल्यानि तयोर्मध्ये करत्रये ॥ ८२ ॥

इति रवींदुनिमित्तशल्यम् ।

अवर्गोच्चारिते प्रश्ने प्राच्यां दिशि समादिशेत् ॥
कुंजरास्थीनि पक्षैर्वा पुरुषस्य प्रमाणतः ॥ ८३ ॥
कवर्गोच्चारिते प्रश्ने त्वाग्नेय्यामादिशेद्दिशि ॥
मार्जारस्याजशल्यं वा हस्तमात्रप्रमाणतः ॥ ८४ ॥
चवर्गोच्चारिते प्रश्ने याम्यायां च समादिशेत् ॥
हरेर्लुलायशल्यं वा हस्तमात्रप्रमाणतः ॥ ८५ ॥
टवर्गोच्चारिते प्रश्ने नैर्ऋत्यां च समादिशेत् ॥
शुनः शल्यं नृशल्यं वा सार्द्धहस्तप्रमाणतः ॥ ८६ ॥
तवर्गोच्चारिते प्रश्ने प्रतीच्यां च समादिशेत् ॥
सर्पस्यांडजशल्यं वा हस्तद्वयमिते क्षितौ ॥ ८७ ॥
पवर्गोच्चारिते प्रश्ने वायव्यां शल्यमादिशेत् ॥
आखोर्भिपस्य वा नूनं हस्तखातप्रमाणतः ॥ ८८ ॥
यवर्गोच्चारिते प्रश्ने ह्युदीच्यामादिशेत्तदा ॥
गजस्याश्वस्य वा शल्यं पूर्वखातप्रमाणतः ॥ ८९ ॥
शवर्गोच्चारिते प्रश्ने त्वैशान्यां च समादिशेत् ॥
शशकस्योक्षशल्यं वा हस्तद्वयमिते क्षितौ ॥ ९० ॥
प्रश्नेत्युच्चारिते वेधे ब्रह्मस्थाने समादिशेत् ॥
नृशल्यं गजशल्यं वा नरखातप्रमाणतः ॥ ९१ ॥
प्रश्नेऽप्युच्चारिते यत्र नूनं वर्गस्य पंचमे ॥
न विद्यते तत्र शल्यं ब्रह्मोक्तत्वान्न संशयः ॥ ९२ ॥

इति प्रश्नशल्यम् ।

एकद्वित्रिचतुःपंचषट्सप्ताष्टादशाह्वयाः ॥
शालाः स्युर्दशभेदास्ताः सहिता नवशालयः ॥ ९३ ॥
आलिंदभेदैरेताः स्युः प्रत्येकं दशपड्विधाः ॥
षष्टिभिः सहिताः सप्तमिताः शालाः प्रकीर्तिताः ॥ ९४ ॥
ताश्चापि रूपद्विग्रामप्रस्तारैर्विविधाः स्मृताः ॥
तेषां समस्तभेदानां प्रस्तारमधुनोच्यते ॥ ९५ ॥
गुरोरधो लघुः स्थाप्यः पुरस्तादूर्ध्ववन्न्यसेत् ॥
गुरुभिः पश्चिमं पूर्वं सर्वलघ्ववधिर्विधिः ॥ ९६ ॥
स्यादालिंदं लघुस्थाने नालिंदं गुरुमाश्रितम् ॥
गृहद्वारादलिन्देषु भवेयुर्दशपड्विधाः ॥ ९७ ॥
ध्रुवं धान्यं जयं नंदं खरं कान्तं मनोरमम् ॥
सुवक्त्रं दुर्मुखं क्रूरं विपक्षं धनदं क्षयम् ॥ ९८ ॥
आक्रंदं विपुलं चैव षोडशं विजयं गृहम् ॥
इत्येवं शालभेदानि शेषाणामेवमेव हि ॥ ९९ ॥
ध्रुवसंज्ञं गृहं त्वायं धनधान्यसुखप्रदम् ॥
धनधान्यप्रदं नृणां जयं तद्विजयप्रदम् ॥ १०० ॥
नंदं स्त्रीहानिदं नूनं खरं संपद्विनाशनम् ॥
पुत्रपौत्रप्रदं कांतं श्रीप्रदं यन्मनोरमम् ॥ १ ॥
सुवक्त्रं भोगदं नूनं दुर्मुखं विसुखप्रदम् ॥
सर्वदुःखप्रदं क्रूरं विपक्षं शत्रुभीतिदम् ॥ २ ॥
धनदं धनदं गेहं क्षयं सर्वक्षयप्रदम् ॥
विजयं नाम सदनं धनदं विजयप्रदम् ॥ ३ ॥
ध्रुवाख्यं द्वित्रिभूमायं सौधसंज्ञं धरातलम् ॥
सुवर्णशिखरः सोऽपि प्रासादः सर्वभूभुजाम् ॥ ४ ॥
सौधाख्यं सदनं शश्वद्धनधान्यप्रदं सदा ॥

प्रासादसदनं शश्वद्धनारोग्यसुखप्रदम् ॥ ५ ॥
पुरतो मंडपं चास्य तदेव भुवनेश्वरम् ॥
तद्गृहं विश्वरूपाख्यं सर्वसंपत्प्रदं सदा ॥ ६ ॥
धनाख्यं सदनं द्वित्रिचतुःपंचादिभूमिकम् ॥
भूरिचंद्रं महीपानां वित्तवृत्तसुखप्रदम् ॥ ७ ॥
जयाख्यनामसदनं द्वितीयाद्यं तु भूमिकम् ॥
विमुखं नाम तद्गेहं भार्यानाशप्रदं सदा ॥ ८ ॥
नन्दाख्यं सदनं यत्र द्वितीयाद्यं तु भूमिकम् ॥
पूर्णचन्द्रं महद्गेहं सुखदं सर्वभूभुजाम् ॥ ९ ॥
खरं गेहं यदा यत्र द्वितीयाद्यं तु भूमिकम् ॥
आसुरं नामसदनं दुःखशोकभयप्रदम् ॥ ११० ॥
प्रासादो वाऽथ सौधो वा मनोरमगृहं यदा ॥
आनंदसदनं नाम चित्तानंदप्रदं सदा ॥ ११ ॥
प्रासादो वाऽथ सौधो वा सुवक्त्रवदनं यदा ॥
हाटकं नाम सदनं सदा हाटकदं शुभम् ॥ १२ ॥
प्रासादो वाऽथ सौधो वा दुर्मुखं सदनं यदा ॥
दुर्मुखं नामसदनं सर्वकार्यविनाशनम् ॥ १३ ॥
प्रासादो वाऽथ सौधो वा क्रूराख्यं सदनं यदा ॥
क्रूराख्यं सदनं नाम दुःखशोकभयप्रदम् ॥ १४ ॥
प्रासादो वाऽथ सौधो वा विपक्षसदनं यदा ॥
शत्रुसंज्ञं च तद्गेहं सर्वदा शत्रुभीतिदम् ॥ १५ ॥
प्रासादो वाऽथ सौधो वा धनदाख्यं गृहं भवेत् ॥
धनधान्यप्रदं गेहं धनधान्यसुखावहम् ॥ १६ ॥
प्रासादो वाऽथ सौधो वा क्षयाख्यं सदनं यदा ॥
आयुःक्षयं नाम गृहं सर्वदा तत्प्रदं ततः ॥ १७ ॥

प्रासादो वाऽथ सौधो वा त्वाक्रंदं सदनं यदा ॥
आक्रंदं नाम सदनं वह्निभीतिप्रदं सदा ॥ १८ ॥
विपुलाख्यं यदा यत्र सौधः प्रासाद एव वा ॥
विपुलं नाम सदनं विपुलं धनधान्यदम् ॥ १९ ॥
विजयाख्यं यदा नूनं सौधः प्रासाद एव च ॥
विजयं नाम सदनं सर्वदा विजयप्रदम् ॥ १२० ॥
विजयं नाम भवति सदनं सहितं यदा ॥
तद्भवं विजयं नाम स्मरणाद्विजयप्रदम् ॥ २१ ॥
एकशाला यदा नूनं चतुर्द्वारसमन्वितम् ॥
मनोरथप्रदं गेहं नाम्ना तद्विश्वतोमुखम् ॥ २२ ॥
तदेव प्रवरैर्युक्तं कोणमध्येऽथ तद्गृहम् ॥
पुंडरीकं नाम भवेत्सर्वकामफलप्रदम् ॥ २३ ॥
पश्चिमद्वारहीनं तद्गृहंश्रीनिलयाह्वयम् ॥
श्रीप्रदं सर्वदा राज्ञां पुत्रपौत्रप्रवर्द्धनम् ॥ २४ ॥
उदग्द्वारविहीनं तच्छूकरस्य पदाह्वयम् ॥
सूकराद्भयदं नूनमथवा भूपतेर्भयम् ॥ २५ ॥
पूर्वद्वारविहीनं तद्व्याघ्रस्य पदसंज्ञकम् ॥
चतुष्पाद्भयदं गेहमथवा तस्कराद्भयम् ॥ २६ ॥
दक्षिणद्वारहीनं तद्गृहं शेखरसंज्ञकम् ॥
सर्ववस्तुप्रदं गेहं सर्वरत्नप्रदं सदा ॥ २७ ॥
इत्येकशालाभेदानि द्विशालाभेदमुच्यते ॥
द्विशालं कर्त्तुकामो यः कुर्यात्सम्यक्परीक्षणम् ॥ २८ ॥
याम्यपश्चिमयोर्नूनं द्विशालं कमलाकरम् ॥
नामतः सर्वदा नृणां श्रीपदं सर्वभोगदम् ॥ २९ ॥
पश्चिमोत्तरयोः शाला श्वापदं नाम नामतः ॥

हृद्रोगदुःखभयदमथवा चौरभीतिदम् ॥ १३० ॥
प्रवस्तौम्ययोर्द्विशाला सा विपक्षा दुःखकारिणी ॥
शत्रुभ्यो भयदा शश्वदथवा चौरभीतिदा ॥ ३१ ॥
पूर्वदक्षिणयोर्नूनं द्विशाला सर्पदंष्ट्रिका ॥
आधिव्याधिव्यालचौरविशेषभयदा सदा ॥ ३२ ॥
याम्यपश्चिमयोरेव द्विशाला मंगलाप्रदा ॥
प्रासादो वाथ सौधो वा तस्यामेव तु कारयेत् ॥ ३३ ॥
अन्यादिक्षु द्विशालासु नैःस्वं शोकं लभेन्नरः ॥
तस्माद्विशालां वाऽन्यत्र प्रयत्नात्परिवर्जयेत् ॥ ३४ ॥
द्विशालाद्यासु सर्वासु द्वित्रिपंचादिभूमिकैः ॥
एवं षोडश सद्मानि भवंत्यत्राप्यनुक्रमात् ॥ ३५ ॥
खंडेंदुसंज्ञकं त्वाद्यं द्वितीयं बुद्धिवर्द्धनम् ॥
तृतीयं शंखसंज्ञं तु धनायुःस्त्रीप्रदानि वे ॥ ३६ ॥
चतुर्थपंचमं सद्म स्त्रीसौभाग्यविनाशदम् ॥
षष्ठसप्ताष्टमं गेहं लाभायुःश्रीप्रदं सदा ॥ ३७ ॥
नवैकादशमं दुःखरोगशोकभयप्रदम् ॥
द्वादशं सदनं नूनं धनधान्यप्रदं सदा ॥ ३८ ॥
शोकदुःखप्रदं शश्वत्त्रयोदशचतुर्दशम् ॥
षोडशं पंचदशमं त्वायुरारोग्यवृद्धिदम् ॥ ३९ ॥
उक्ता द्विशालाभेदानि नामरूपफलैः सह ॥
त्रिशालानामभेदानि अधुना कथ्यते भृशम् ॥ १४० ॥
उदड्मुखा त्रिशाला सा जयंती संज्ञिता त्वथ ॥
विपुला कीर्तिदा राज्ञां पुत्रपौत्रधनप्रदा ॥ ४१ ॥
प्राग्द्वारसहिता सा च नाम्ना हरिपदाह्वयम् ॥
तदीप्सितार्थफलदं राज्ञां मुख्यतरं सदा ॥ ४२ ॥

सा दक्षिणद्वारयुता चोग्रदंष्ट्राह्वया भुवि ॥
निःस्वप्रदा क्षितीशानामथवा शत्रुभीतिदा ॥ ४३ ॥
पश्चिमद्वारसहिता सर्वदा कुसुमाह्वया ॥
मित्रवृद्धिप्रदा नृणामथवा भ्रातृवृद्धिदा ॥ ४४ ॥
नानाकल्याणदाः शश्वत्पुत्रपौत्रप्रवर्द्धिनी ॥
प्राङ्मुखा या त्रिशाला सा नक्षत्रपदसंज्ञिता ॥ ४५ ॥
सर्वदा धनदा नृणां दुःखशोकविनाशदा ॥
उदग्द्वारयुता सा च स्वर्णगर्भाह्वया क्षितौ ॥ ४६ ॥
स्वर्णदास्वपरं चोदङ्मुखायां यत्फलं तु तत् ॥
कुलक्षयकरा सैव त्रिशाला दक्षिणामुखा ॥ ४७ ॥
शालानां पापसंज्ञानां दृष्ट्वा सूर्य्यं निरीक्षयेत् ॥
प्रत्यङ्मुखा त्रिशाला सा क्षयाख्या नामतस्तथा ॥ ४८ ॥
बहुव्ययकरी सैव पुत्रायुर्धननाशदा ॥
गृहोपरि गृहाणां च सम्यक्संचिंत्य बुद्धिमान् ॥ ४९ ॥
प्रस्तारं यन्मनोरम्यं नानारूपप्रभेदतः ॥
उक्ता त्रिशालाभेदानि चतुःशालामथोऽच्यते ॥ १५० ॥
पितामहोक्तमार्गेण नामरूपफलैः पृथक् ॥
चतुःशाला चतुर्भेदा सर्वतो भद्रसंज्ञिता ॥ ५१ ॥
आयुरारोग्यविपुला कीर्तिसंपत्प्रदा नृणाम् ॥
पश्चिमद्वारसहिता नंद्यावर्त्ताह्वया भृशम् ॥ ५२ ॥
सुगंधवस्तुनिचयवस्त्ररत्नप्रदा सदा ॥
उत्तरद्वारसहिता शश्वत्सा रुचकाह्वया ॥ ५३ ॥
अन्नपानादिनिखिलभोगसौभाग्यपुत्रदा ॥
प्राग्द्वारसहिता सैव स्वस्तिकेति प्रकीर्तिता ॥ ५४ ॥
गजाश्वपशुलोहादिप्रपणश्रीप्रदा नृणाम् ॥

दक्षिणद्वारसहिता वर्द्धमानाह्वया भुवि ॥ ५५ ॥
तत्रस्थसर्ववस्तूनि वर्द्धन्ते वै श्रिया सह ॥
चतुःशालामध्यभागे कुर्यात्पूर्वमुखं गृहम् ॥ ५६ ॥
गृहराडिति विख्यातं सर्वसंपत्प्रदं सदा ॥
तद्गृहं याम्यवक्त्रं चेत्कुबेरपदसंज्ञकम् ॥ ५७ ॥
शश्वत्कुबेरगृहवदालये सर्वसंपदाम् ॥
प्रत्यग्वक्त्रं मंदिरं वै महेन्द्रपदसंज्ञितम् ॥ ५८ ॥
इंद्रवेश्म यथा सर्वसंपद्युक्तं तथैव तत् ॥
उदङ्मुख तत्सदनं वारुणं पदसंज्ञितम् ॥
सर्वरत्नालयं गेहं सर्वभोगसुखावहम् ॥ ५९ ॥
प्रासादो वाथ सौधो वा तद्गृहे वै भवेद्यदि ॥
तच्चंद्रशेखरपदं निधीनामालयं भृशम् ॥ १६० ॥
कोणेष्वयचरं कुर्यान्महेंद्रपदसंज्ञितम् ॥
महेंद्रनिलयं यद्वत्तद्वच्च संपदालयम् ॥ ६१ ॥
अस्यामपि द्वित्रिचतुःपंचषट्सप्तभूमिकैः ॥
षोडशाख्यानि जातानि तानि प्रस्तारतः क्रमात् ॥ ६२ ॥
पंचादिदशपर्यंताः शालास्त्वेवं प्रकल्पयेत् ॥
प्रस्तारनामदिङ्रूपफलैर्यो वास्तुकोविदः ॥ ६३ ॥
ऐंद्र्यां दिशि स्नानगेहमाग्नेय्यां पचनालयम् ॥
याम्यायां शयनं वेश्म नैर्ऋत्यां शस्त्रमंदिरम् ॥
वारुण्यां भोजनगृहं वायव्यां पशुमंदिरम् ॥
उदीच्यां हाटकं सद्म ऐशान्यां देवमंदिरम् ॥ ६५ ॥
ध्वजधूमहरिश्वाख्यवृषगर्दभकुंजराः ॥
ध्वांक्षश्चैते क्रमादायाः स्वस्थाने स्वगृहे शुभाः ॥ ६६ ॥
ऐंद्राग्न्योर्मंथनं मध्ये याम्याग्न्यो रतिमंदिरम् ॥

याम्यराक्षसयोर्मध्ये पुरीषत्यागमंदिरम् ॥ ६७ ॥
राक्षसांबुपयोर्मध्ये विद्याभवनमंदिरम् ॥
तोयेशानिलयोर्मध्ये सदनं रोदनं ततः ॥ ६९ ॥
कामोपभोगसदनं वायुकौबेरमध्ययोः ॥
कौबेरशानयोर्मध्ये चिकित्सासदनं सदा ॥ १७० ॥
पुरंदरेशयोर्मध्ये सर्ववस्तुसुसंग्रहम् ॥
सदनं कारयेदेवं क्रमादुक्तानि षोडश ॥ ७१ ॥
ध्वजः सिंहे तौ च गजे त्वेते गवि शुभप्रदाः ॥
वृषो न पूजितोऽन्यत्र ध्वजः सर्वत्र पूजितः ॥ ७२ ॥
गृहोपरि गृहादीनामायमात्रं प्रकल्पयेत् ॥
न षड्गेशंकुमपि स्थापयेदायसद्मनि ॥ ७३ ॥
मंदिराणामष्टविधं जलस्रावं क्रमेण वै ॥
पांचालमानं वै देहं कौरवं कौरजन्यकम् ॥ ७४ ॥
मागधं सूरसेनाख्यं गांधारावंतिसंज्ञकम् ॥
एषामष्टविधानां च प्रमाणं सम्यगुच्यते ॥
स्वचतुर्भागविस्तारे सोत्सेधं यत्तदुच्यते ॥
पांचालमितरेषां च द्व्यंगुलोत्तरवृद्धिदः ॥ ७६ ॥
वैदेहादीनि सर्वाणि मानानि स्युर्यथाक्रमात् ॥
पांचालः सर्ववर्णानां वैदेहः शूद्रजातिषु ॥ ७७ ॥
आवंतिकं चाग्रजानां गांधारः सर्वभूभुजाम् ॥
विशां कौजन्यकं मानं वैदेहं शूद्रजातिषु ॥ ७८ ॥
सामान्यमन्यमानानि विप्रादीनां यथाक्रमात् ॥
गृहोपरिगृहादीनां जलस्रावं यथोच्यते ॥ ७९ ॥
नानाविधानि हर्म्याणि जालकाचिचितानि च ॥
पश्चिमे दक्षिणे चैव गवाक्षं मंदिरस्य च ॥ १८० ॥

गजाये वा ध्वजाये वा गजानां मंदिरं शुभम् ॥
अश्वालयं ध्वजाये वा खराये वा वृषेऽपि वा ॥ ८१ ॥
उष्ट्राणां मंदिरं कार्यं गजाये वा वृषे ध्वजे ॥
पशुसद्म वृषाये वा ध्वजाये वा शुभप्रदम् ॥ ८२ ॥
शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः ॥
अंगत्रछत्रवस्त्राणां वृषभाये ध्वजेऽपि वा ॥ ८३ ॥
पादुकोपानहौ कार्य्यौ सिंहायेऽप्यथवा ध्वजे ॥
उक्तानामप्यनुक्तानां मंदिराणां ध्वजः शुभः ॥ ८४ ॥
उदुंबरप्लक्षनिंबचूतस्नुहिबिभीतकः ॥
वदरीखादिरं त्यक्त्वा निंदिताः कंटकद्रुमाः ॥ ८५ ॥
वटाश्वत्थकपित्थाख्यतिंतिणीकतकद्रुमाः ॥
अगस्तिशिग्रुपालाशदुग्धवृक्षाश्च निंदिताः ॥ ८६ ॥
करंजेरंडनिर्गुंडीगृहशालाश्च निंदिताः ॥
स्वगृहात्पश्चिमे याम्ये पितुः स्वाग्रजमंदिरम् ॥ ८७ ॥
गृहपादा गृहस्तंभा समाः कार्य्याश्च नाऽसमाः ॥
नात्युच्छ्रितं नातिनीचं कुड्योत्सेधं यथा रुचिः ॥ ८८ ॥
भित्तिः पक्वेष्टकाभिर्वा दारुणाप्यथवा मृदा ॥
कार्या चित्रपटैर्वापि तृणैः पर्णैश्च न क्वचित् ॥ ८९ ॥
ऐश्वर्य्यं पुत्रहानिश्च स्त्रीहानिर्निधनं भवेत् ॥
संपच्छत्रुभयं सौख्यं पुष्टिः प्राच्यादितः क्रमात् ॥ १९० ॥
कूपे कृते मध्यमे तु धनहानिश्च वास्तुनः ॥
तस्मात्सम्यग्विचार्य्याथ कूपं कुर्याच्च बुद्धिमान् ॥ ९१ ॥
पुन्नागशोकतिलकशमीबकुलचंपकाः ॥
दाडिमीपिप्पलीद्राक्षापिचुमंदाजयामराः ॥ ९२ ॥
बंधूकपूगपनससरोजगृहमाल्लिकाः ॥

मल्लिकापाटलीजातीनारिकेरास्तृणद्रुमाः ॥ ९३ ॥
एते गृहांगणे वृक्षाः सर्वदा मंगलप्रदाः ॥
प्लक्षकर्कन्धुवृक्षौ द्वौ गृहस्योत्तरतः शुभे ॥ ९४ ॥
न्यग्रोधोदुंबराश्वत्थाः प्रागादिषु शुभप्रदाः ॥
अगस्तिमातुलिंगाख्या हरिद्राकदलीस्तथा ॥ ९५ ॥
स्वयं प्रजाता अप्येते दुःखशोकभयप्रदाः ॥
निर्माणे मंदिराणां च प्रवेशे त्रिविधेऽपि च ॥ ९६ ॥
वास्तुपूजा च कर्तव्या तस्मात्तां कथयाम्यथ ॥
गृहमध्ये हस्तमात्रं समंतात्तंडुलोपरि ॥ ९७ ॥
एकाशीतिपदं कार्य्यं तिलैस्तुल्यं सुशोभनम् ॥
एकद्वित्रिपदाः पंचचत्वारिंशत्सुरार्चिताः ॥ ९८ ॥
द्वात्रिंशद्बाह्यतो वक्ष्यमाणाश्चांतस्त्रयोदश ॥
तेषां स्थानानि नामानि वक्ष्यामीश्वरकोणतः ॥ ९९ ॥
तत्राग्निशंभुकोणस्थस्त्वसौ चैव पदेश्वरः ॥
तस्माद्वितीयः पर्जन्यश्चासावेकपदेश्वरः ॥ २०० ॥
जयंत्येंद्रार्कसत्याख्या भृशाश्च द्विपदेश्वराः ॥
आकाशवायुपरतः क्रमादेकपदेश्वराः ॥ १ ॥
एवं प्राच्यां नव ज्ञात्वा नवमे वान्यदिक्षु च ॥
आद्यश्चांतावेकपादा द्विपादाः पंच मध्यमाः ॥
पूषाद्यष्टौ यमांताः स्युरमरायाम्यभागगाः ॥ २ ॥
अष्टौ पितृगणाधीशा यमांताः पश्चिमे सुराः ॥
आद्यंतौ द्वौ चैकपदौ द्विपदाः पंच मध्यगाः ॥ ३ ॥
रोगादिरित्यंतत्सुराः सप्त सौम्यादिशि क्रमात् ॥
तदधस्थश्चतुष्कोणेष्वीशानादिषु च क्रमात् ॥ ४ ॥
आपः सावित्रविजयरुद्राश्चैकपदेश्वराः ॥

मध्ये नवपदो ब्रह्मा तस्येशानादिकोणगाः ॥ ५ ॥
आपवत्सोऽथ सविता विबुधाधिपसंज्ञकाः ॥
राजयक्ष्मा च चत्वारः सुराश्चैकपदेश्वराः ॥ ६ ॥
ब्रह्मणः पूर्वतो दिक्षु त्रिपदाश्चामरा अमी ॥
अर्यमा च विवस्वांश्च मित्रः पृथ्वीधरः क्रमात् ॥ ७ ॥
स्वस्वस्थानेषु देवेषु स्थापितेष्वीदृशं भवेत् ॥
कोणेषु पंच पंचैव चतुष्वैकपदाः सुराः ॥ ८ ॥
प्रागादिदिक्षु द्विपदाः पंच पंच यथा क्रमात् ॥
ब्रह्मणः पूर्वतो दिक्षु द्विपदाः स्युः समीपगाः ॥ ९ ॥
हिरण्यरेताः पर्जन्यो जयंतः पाकशासनः ॥
सूर्यसत्यौ भृशाकाशौ वायुः पूषा च वै तथा ॥ २१० ॥
गृहक्षतः पितृपतिर्गंधर्वो भृंगराजकः ॥
मृगः पितृगणाधीशः स्थाप्यो दौवारिकाह्वयः ॥ ११ ॥
सुग्रीवः पुष्पदंतश्च जलाधीशो निशाचरः ॥
शोषः पापश्च रोगो हि मुखो भल्लाट एव च ॥ १२ ॥
सोमसर्पौ दित्यदिती द्वात्रिंशदमराः स्मृताः ॥
आपश्चैवापवत्सश्च जयो रुद्रस्तथैव च ॥ १३ ॥
मध्ये नवपदो ब्रह्मा तस्थौ तस्य समीपगः ॥
प्रागाद्यंतरिता देवाः परितो ब्रह्मणः स्मृताः ॥ १४ ॥
अर्यमा सविता चैव विवस्वान्विबुधाधिपः ॥
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥ १५ ॥
आपवत्सोऽष्टमः पंचचत्वारिंशत्सुरोत्तमाः ॥
ज्ञात्वैवं स्थाननामानि ब्रह्मणा सहितान्यसेत् ॥ १६ ॥
वास्तुज्ञो वास्तुमंत्रेण गंधपुष्पाक्षतादिभिः ॥
प्रणवेनार्चयेद्वापि अथवा स्वस्वनामभिः ॥ १७ ॥

शुक्लवस्त्रयुगं दद्याद्धूपदीपफलैः सह ॥
अपूपैर्भूरिनैवेद्यैर्वाद्यैः सह समर्पयेत् ॥ १८ ॥
ताम्बूलं च ततो दद्याद्देवेभ्यश्च पृथक्पृथक् ॥
दत्त्वा पुष्पांजलिं कर्त्ता प्रार्थयेद्वास्तुपूरुषम् ॥ १९ ॥
विप्रेभ्यो भोजनं दत्त्वा स्वयं भुंजीत बंधुभिः ॥
नमस्ते वास्तुपुरुष भूशय्यानिरत प्रभो ॥ २२० ॥
मद्गृहे धनधान्यादिसमृद्धिं कुरु सर्वदा ॥
इति प्रार्थ्य ततो दद्याद्दक्षिणामर्चकाय च ॥ २१ ॥
एवं यः कुरुते सम्यग्वास्तुपूजां प्रयत्नतः ॥
आरोग्यं पुत्रपौत्रादि धनधान्यं लभेन्नरः ॥ २२ ॥
वास्तुपूजामकृत्वा यः प्रविशेन्नवमंदिरे ॥
रोगान्नानाविधान्क्लेशानश्नुते सर्वसंकटान् ॥ २२३ ॥
इति श्रीमहर्षिवृद्धवसिष्ठवि० संहितायां वास्त्वध्याय एकोनचत्वारिंशः॥३९॥

---

## अथ सुरप्रतिष्ठाध्यायः ४० ।

अथ प्रतिष्ठां कथयामि सम्यग्विश्वस्य विष्णोश्च तथापरेषाम् ॥
सौम्यायने देवगुरौ च शुक्रे संदृश्यमाने यदि वारकाणाम् ॥ १ ॥
मासे तपस्ये तपसि प्रतिष्ठा धनायुरारोग्यकरी च कर्तुः ॥
चैत्रे महारुग्भयदा च शुक्रे समाधवे पुत्रधनप्रदा सा ॥ २ ॥
आषाढमासादिचतुष्टये च कलत्रसंतानविनाशदा च ॥
ऊर्जे च कर्तुर्निधनप्रदा च सौम्ये सपौषेऽखिलदुःखदा सा ॥ ३ ॥
वलक्षपक्षः शुभदः समस्तः सदैव तत्राद्यदिनं विहाय ॥
अन्त्यत्रिभागं परिहृत्य कृष्णे पक्षोऽपि शस्तः खलु पक्षयोश्च ॥ ४ ॥
रिक्तावमात्यक्तदिनेष्वनिंद्ययोगेषु वैनाशिकवर्जितेषु ॥
दिने महादोषविवर्जिते च शशांकताराबलसंयुतेऽपि ॥ ५ ॥

देवस्य यस्योडुतिथिप्रशस्ते संस्थापने कर्मणि वासरश्च ॥
कर्तुर्दिनेशस्य बलं सदैव ग्रामाधिपग्रामबलं विचार्यम् ॥ ६ ॥
हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु ॥
त्रिप्रोत्तराधातृशशांकभेषु सर्वामरस्थापनमुत्तमं स्यात् ॥ ७ ॥
कीर्तिप्रदं क्षेमकरं कृशानोर्भयप्रदं वृद्धिकरं नृपाणाम् ॥
लक्ष्मीकरं सुस्थिरदं त्विनादिवारेषु संस्थापनमामनंति ॥ ८ ॥
पंचांगशुद्धौ दिवसे दिनस्य पूर्वार्द्धभागे शुभदे मुहूर्ते ॥
शुभग्रहैर्वीक्षितसंयुते वा न नैधने नैधनशुद्धिलग्ने ॥ ९ ॥
पंचेष्टिके जीवशशांकसूर्यमुख्यग्रहैः सौम्यनवांशयुक्तैः ॥
लग्ने स्थिरे चोभयराशिलग्ने नवांशके चोभयभे स्थिरे वा ॥ १० ॥
चरोदये लग्नगते न कार्यं संस्थापनं नैव चरांशकेऽपि ॥
चरोऽपि मुख्यः स तुलांशकश्च सदा मृदुत्वात्सुरसन्निवेशे ॥ ११ ॥
सूर्येंदुभौमार्क्यहिकेतवश्च लग्नस्थिता नैधनदाश्च कर्तुः ॥
सौम्यग्रहा लग्नगताः सदा ते त्वायुर्धनारोग्यकराश्च नूनम् ॥ १२ ॥
लग्नाद्वितीये शुभखेचरेंद्राश्चंद्रश्च पुत्रार्थशुभप्रदा स्युः ॥
तत्रैव पापः पतिपक्षदुःखशोकप्रदा व्याधिकराः सदैव ॥ १३ ॥
असौम्यसौम्या हिमदीधितिश्च तृतीयगा लाभकरा नितान्तम् ॥
चतुर्थगा लाभकराश्च सौम्याश्चन्द्रश्च पापा विसुखप्रदाः स्युः ॥ १४ ॥
आनंददाः पंचमगाश्च सौम्या विधुश्च पापा रिपुभीतिदाः स्युः ॥
शत्रुस्थिताः शत्रुविनाशदाः स्युः क्रूराः सचंद्रा भयदास्तु सौम्याः ॥ १५ ॥
द्यूनस्थिता सेंदुशुभा दिशंति लाभं परे भीतिहराः सदैव ॥
सर्वे ग्रहा नैधनदास्त्वजस्रं सौम्यास्त्वसौम्याः खलु मृत्युसंस्थाः ॥ १६ ॥
नवमस्थानगाः सौम्याः सेंदवो विजयप्रदाः ॥
असौम्या नवमस्थाने दुःखशोकभयप्रदाः ॥ १७ ॥
दशमस्थानगाश्चन्द्रसहिताः शुभखेचराः ॥

अर्थलाभकराः पापा व्याधिशत्रुभयप्रदाः ॥ १८ ॥
लाभस्थानगताः सर्वे खेचरा बहुलाभदाः ॥
व्ययदा व्ययगाः पापाः सेंदवः शोकदाः शुभाः ॥ १९ ॥
एकोऽपि जीवो बलवान्तनुस्थः सितोऽपि सौम्योऽप्यथवा बली चेत् ॥
दोषानशेषान्विनिहंति सद्यः स्कंदो यथा तारकदैत्यवर्गम् ॥ २० ॥
हंत्यर्थहीनं त्वमरप्रतिष्ठा कर्त्तारमृत्विग्वरविप्रमुख्यम् ॥
मंत्रैर्विहीना त्वथकर्तृभार्यां यदा तदा लक्षणहानितश्च ॥ २१ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठवि० संहितायां सुरप्रतिष्ठाध्यायश्चत्वारिंशः ॥ ४० ॥

## अथ गुणनिरूपणाध्यायः ४१ ।

काल एवेश्वरः साक्षादीश्वरः काल एव सः ॥
विद्यते चेश्वरज्ञानी चेत्कालज्ञः स एव वै ॥ १ ॥
तस्मात्कालं न जानंति योगिनोऽपि महीतले ॥
तथापि देहिनां नूनं हिताय कमलासनः ॥ २ ॥
भचक्रभ्रमणात्स्थूलकालं कल्पितवान्प्रभुः ॥
प्राणादिदिनमासादियुगांतं चैव भग्रहैः ॥ ३ ॥
शुभाशुभग्रहोत्पातपंचांगतिथिवारजैः ॥
तिथिनक्षत्रवारोत्थवारनक्षत्रपूर्वकैः ॥ ४ ॥
एवमाद्यैर्गुणैर्दोषैर्नित्यं कालः समन्वितः ॥
तस्मात्कालगुणान्दोषान्कथयामि पृथक्पृथक् ॥ ५ ॥
नंदास्वंबुपवित्राग्निरौद्रविष्णूत्तरात्रयम् ॥
वारयोगा भवन्त्येते सर्वकार्ये शुभप्रदाः ॥ ६ ॥
भद्रास्वदितिदैत्येज्ये कमलासनतारकाः ॥
श्रेष्ठयोगा भवंत्येते सर्वदा मंगलप्रदाः ॥ ७ ॥
जयासु वसुसोमार्कदस्रांत्येज्यभत्र्युत्तराः ॥
शुभयोगास्त्वमी नृणां मंगले मंगलप्रदाः ॥ ८ ॥

रिक्तास्त्रीज्यद्विदैवेंद्रसार्पवायव्यतारकाः ॥
तदा कल्याणयोगाः स्युः सर्वकार्येषु शोभनाः ॥ ९ ॥
पूर्णासु पुष्यपौष्णाद्यवसुवारीशतारकाः ॥
वर्द्धमानाह्वया योगाः शुभकार्यप्रवृद्धिदाः ॥ १० ॥
उत्तरात्रयपौष्णेज्यमूलार्कहरितारकाः ॥
चित्रेंद्रदितयः सौम्या योगाः स्युर्भानुवासरे ॥ ११ ॥
सोमवारे दितिमरुद्वैष्णवत्रयतारकाः ॥
रोहिणीद्वयशाक्रेज्या महायोगाः प्रकीर्तिताः ॥ १२ ॥
उत्तरात्रयमैत्रेज्यदस्रात्येद्धग्नितारकाः ॥
भौमवारेण संयुक्ताः पूर्णयोगाः प्रकीर्तिताः ॥ १३ ॥
बुधवारेसुरेज्येंदुधातृवह्नित्रिरुत्तराः ॥
हस्तत्रयानलास्ताराः शंखयोगाः प्रकीर्तिताः ॥ १४ ॥
गुरुवारेऽदितीज्यार्कत्रयमित्रांत्यतारकाः ॥
श्रवणत्रयमित्येते योगाश्चामृतसंज्ञकाः ॥ १५ ॥
रेवतीद्वयहस्तेंदुधातृमित्रत्रिरुत्तराः ॥
शुक्रवारेण संयुक्ताः पद्मयोगाः प्रकीर्तिताः ॥ १६ ॥
रोहिणीद्वयपुष्येंद्रविष्णुत्रयमघोत्तराः ॥
शनिवारेण संयुक्ता योगाश्चानंदसंज्ञकाः ॥ १७ ॥
हस्तेंदुदस्रमित्रेज्यपौष्णपद्मजतारकाः ॥
आदित्यादिषु वारेषु सिद्धियोगाः क्रमादमी ॥ १८ ॥
मूलहस्त्युत्तराभाद्रकृत्तिकादितयः क्रमात् ॥
भाग्यानिलाख्याः पीयूषयोगा वारेष्विनादिषु ॥ १९ ॥
स्वतुंगस्वांशगो जीवो यदि लग्नसमन्वितः ॥
बलवान्वीक्षयेद्वापि योगः कपिलसंज्ञकः ॥ २० ॥
परमोच्चगतो जीवो वीक्षयेद्वा विलग्नग ॥

समुद्रयोगो विज्ञेयो योगराड्लसंयुतः ॥ २१ ॥
लग्नमालोकयेज्जीवस्त्वथवा लग्नगो बली ॥
वापीयोगः स विज्ञेयस्त्वधिमित्रगृहस्थितः ॥ २२ ॥
वीक्षयेत्संयुतो वापि लग्नं देवेंद्रपूजितः ॥
स्वधिमित्रभभागस्थः स योगो मुसलाह्वयः ॥ २३ ॥
मित्रराशिगतो जीवो वीक्षयेद्वा विलग्नगः ॥
वियद्योगः स विज्ञेयः कमलासनचोदितः ॥ २४ ॥
गुरुर्बली स्वलग्नस्थो वीक्षयेद्वा विलग्नगः ॥
पुंडरीको महायोगः सर्वदा योगनायकः ॥ २५ ॥
शुभवर्गस्थितो जीवः सुबली सौम्यवीक्षितः ॥
गुणशेखरसंज्ञोऽयं योगो वा केवलं बली ॥ २६ ॥
एवं शुक्रोऽपि सौम्योऽपि गुरुवद्योगकारकौ ॥
ग्रंथविस्तारभीत्याथ त्वेवं संक्षिप्य चोदितम् ॥ २७ ॥
वर्गोत्तमगतो जीवः शुक्रो वा चंद्रजोऽपि वा ॥
गुणधूर्जटिसंज्ञोऽयं यदा ते बलिनस्तदा ॥ २८ ॥
बलिनः केंद्रगाः सौम्या भवंति च यदा तदा ॥
गुणभास्करसंज्ञोऽयं यदि वा लाभसंस्थिताः ॥ २९ ॥
त्रिकोणगा यदा सौम्याः सहोत्थवनगाऽथवा ॥
गुणकौस्तुभसंज्ञोऽयं यदि ते बलवत्तराः ॥ ३० ॥
वर्गोत्तमगतश्चंद्रो बलवाञ्छुभवीक्षितः ॥
लग्नमेवंविधं चेद्वा गुणानां चंद्रशेखरः ॥ ३१ ॥
त्रिषष्ठलाभगाः पापा बलिनः शुभवीक्षिताः ॥
भवंति यदि योगोऽयं श्रीवत्सो योगराट्प्रभुः ॥ ३२ ॥
उच्चस्थो लाभगः सूर्यः षष्ठगो वा तृतीयगः ॥
यदि स्यात्तिसहयोगोऽयं तुंगांशस्थोऽपि वा यदि ॥ ३३ ॥

अधिमित्रगृहस्थो वा मित्रराशिगतोऽपि वा ॥
गुणशार्दूलसंज्ञोऽयं ब्रह्मणा कथितः पुरा ॥ ३४ ॥
स्वतुंगस्थः कुजः सौम्यवीक्षितो लाभगो यदि ॥
दुश्चिक्यस्थो रिपुस्थो वा गुणानामिंद्रसंज्ञकः ॥ ३५ ॥
शनिः स्वतुंगगः सौम्यवीक्षितो लाभसंस्थितः ॥
तृतीयगः षष्ठगो वा गुणानां रत्नमालिका ॥ ३६ ॥
अधिमित्रस्वराशिस्थावथवा मित्रराशिगौ ॥
कुजार्कौ भवतो यत्र गुणो मकरतो भुवि ॥ ३७ ॥
स्वतुंगगः शशी यत्र लाभसंस्थो यदा भवेत् ॥
अधिमित्रगृहस्थो वा गुणानां निर्मलो मणिः ॥ ३८ ॥
चंद्रार्कौ लाभगौ यत्र भवतो यदि केवलम् ॥
गुणार्णवो महायोगो जनानामिष्टसिद्धिदः ॥ ३९ ॥
धर्मकर्मद्वित्रिसंस्थः शशी यत्र भवेद्यदि ॥
सुदर्शनो महायोगो दोषासुरविनाशनः ॥ ४० ॥
लाभस्थितो यदा सूर्यश्चंद्रो वाप्येक एव सः ॥
गुणसागरयोगोऽयं यदा भवति चेद्बली ॥ ४१ ॥
स्ववर्गस्थः शशी यत्र लग्नात्पंचमगो भवेत् ॥
पुण्ययोगः स विज्ञेयो गुरुर्वा यदि वा बुधः ॥ ४२ ॥
नंदा भौमार्कयोर्भद्रा शुक्रेन्दोश्च जया बुधे ॥
शुभयोगा गुरौ रिक्ता पूर्णा मंदेऽमृताह्वया ॥ ४३ ॥
शुक्रज्ञकुजमंदेज्यवारा नंदादिषु क्रमात् ॥
सिद्धा तिथिः सिद्धिदा स्यात्सर्वकालेषु सर्वदा ॥ ४४ ॥
पुण्यस्याद्यद्वितीयांशसंस्थितौ चंद्रवाक्पती ॥
विजयो नाम योगोऽयं समरे विजयप्रदः ॥ ४५ ॥
परमोच्चगतोऽप्येको जीवो वाज्ञः सितोऽपि वा ॥

ब्रह्मदंडो महायोगः सर्वदोषविनाशकृत् ॥ ४६ ॥
स्वतुंगांशस्थिताः सौम्या येषु केषु च राशिषु ॥
कामधेनुरयं योगः चंद्रो वा वृषभांशगः ॥ ४७ ॥
मूलत्रिकोणगाः सौम्या भवन्ति यदि वा शशी ॥
प्रभंजनो महायोगस्त्वथवापि तदंशगाः ॥ ४८ ॥
मूलत्रिकोणगाः पापास्त्रिषष्ठायगता यदि ॥
इन्द्रदंडो महायोगस्तदंशकगता अपि ॥ ४९ ॥
चद्रंः शुभांशको यत्र भवेच्छुभनिरीक्षितः ॥
रुद्रदंडो महायोगो दोषतूलप्रभंजनः ॥ ५० ॥
मुहूर्तश्चाष्टमः शश्वदभिजिद्योगसंज्ञकः ॥
गुणानामधिपः सोऽपि मध्यं दिनगते रवौ ॥ ५१ ॥
उक्तं निरूपणं सम्यग्गुणानामथ सांप्रतम् ॥
पितामहोक्तमार्गेण वक्ष्ये दोषनिरूपणम् ॥ ५२ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठवि० सं० गुणनिरूपणाध्याय एकचत्वारिंशः ॥ ४१ ॥

## अथ दोषनिरूपणाध्यायः ४२।

द्विदैवजलवस्वंत्यब्रह्मेज्यार्यमतारकाः ॥
उत्पातयोगा विज्ञेया भानुवारादिषु क्रमात् ॥ १ ॥
मैत्रविश्वांबुवाय्विंदुसार्पसूर्याख्यातारकाः ॥
मृत्युयोगा मृत्युकराः सूर्यवारादिषु क्रमात् ॥ २ ॥
ब्रह्मेज्यार्यमवैशाखहरिवस्वंत्यभेषु च ॥
नंदायामर्कवारादिष्वन्धयोगाः प्रकीर्तिताः ॥ ३ ॥
रुद्रसार्पाबुनैर्ऋत्यपितृभाग्याग्निभेषु च ॥
भद्रातिथौ काणयोगाः सूर्यवारादिषु क्रमात् ॥ ४ ॥
द्विदैवरौद्रमूलेंद्रवारिविश्वपितृडुषु ॥
जयासु पंगुयोगाः स्युरर्कवारादिषु क्रमात् ॥ ५ ॥

अजपात्पितृवह्नीशत्वाष्ट्रमित्रवसूडुषु ॥
रिक्तासु बधिरा योगाः सूर्यवारादिषु क्रमात् ॥ ६ ॥
उद्वाहादिषु सर्वेषु मंगलेष्वपि निंदिताः ॥
एते स्युः षड्विधा योगाः स्वनामफलदायकाः ॥ ७ ॥
द्वादश्येकादशीनागगौरीस्कंदवसुष्वपि ॥
नवम्यां दग्धयोगाख्या भानुवारादितः क्रमात् ॥ ८ ॥
भरणीचित्रविश्वाख्यवस्वर्यमनगादिषु ॥
पौष्णभेष्वर्कवारादिष्वर्कादिग्रहजन्मभम् ॥ ९ ॥
अस्मिन्योगद्वये यत्तत्कृतं कर्म विनश्यति ॥
तस्माद्योगद्वयं त्याज्यं मंगलेष्वपि सर्वदा ॥ १० ॥
कुजार्क्योः सप्तमी षष्ठी चंद्रे भानौ चतुर्थिका ॥
द्वितीया ज्ञेऽष्टमी जीवे नवमी शुक्रवासरे ॥ ११ ॥
अचिकित्सागदा योगा मंगलेष्वपि निंदिताः ॥
भगंदराश्मरीकुष्ठक्षयरोगप्रदायकाः ॥ १२ ॥
लग्नात्षष्ठाष्टसंस्थे शशिनि सुरगुरौ चापि मंदे सुतस्थे ।
भौमे रंध्रस्थितेऽर्के व्ययभवनगते मृत्युगे चंद्रसूनौ ॥
द्यूनस्थे दैत्यपूज्ये सति निखिलनृणां मृत्युयोगा भवन्ति ।
त्याज्या दावाग्निरूपा सततमवितथं मृत्युदा मंगलेषु ॥ १३ ॥
सप्तषष्ठ्यादितिथयः सोमवारादिभिर्युताः ॥
अग्निजिह्वाः सप्त योगा मंगले कुलनाशदाः ॥ १४ ॥
भानुवारादिभिर्युक्तास्त्वेताः स्युस्तिथयो यदा ॥
विषयोगास्त्वमी सप्त कालकूटविषोपमाः ॥ १५ ॥
घटिकाद्वयमृक्षांते मासांते तु दिनत्रयम् ॥
वर्षांते वर्जयेत्पक्षं ग्रहणे दिनसप्तकम् ॥ १६ ॥
ऋक्षांते पुत्रनाशः स्यान्मासांते तु धनक्षयः ॥

वर्षांते वर्गनाशः स्याद्ग्रहणे सर्वनाशनम् ॥ १७ ॥
पश्चादुपप्लवादेव दोषः स्यान्नैव पूर्वतः ॥
गृहदाहादयो दोषा यथा स्युर्दहनात्परम् ॥ १८ ॥
प्रतिपद्बुधवारे च सूर्यवारे च सप्तमी ॥
महाशूलाह्वयो योगो वर्जनीयो शुभे सदा ॥ १९ ॥
त्रिपूर्वावह्निरौद्राहियाम्यपौरंदरेंदुषु ॥
पापवारेषु युक्तेषु दुष्टयोगाः प्रकीर्तिताः ॥ २० ॥
दुष्टयोगे कृतं कर्म त्वचिरादेव नश्यति ॥
तस्माच्छुभेषु कार्येषु वर्जनीयाः प्रयत्नतः ॥ २१ ॥
जीवस्थानात्तु शीतांशुर्निधनांत्यारिसंस्थितः ॥
योगोऽयं संकटो नाम शोभने निधनप्रदः ॥ २२ ॥
यममैत्रादितिभाजपादुद्रत्वाष्ट्रविष्णुषु ॥
सत्स्वर्कादिषु वारेषु मृत्युदस्त्वशनिः शुभे ॥ २३ ॥
यदा वक्रौ गुरुसितौ परस्परनिरीक्षितौ ॥
सप्तमस्थौ तदा दोषः साक्षाद्स्तमयः समः ॥ २४ ॥
दिवसस्याष्टमे भागे वारेशाद्याः क्रमाद्ग्रहाः ॥
शन्यंशः कुलिको दोषो वारेशः पुनरष्टमः ॥ २५ ॥
मृगेन्द्रसंस्थिते जीवे मध्यदेशे करग्रहे ॥
मृत्युयोगो मृत्युदः स्याद्दंपत्योः पंचवर्षतः ॥ २६ ॥
सिंहे सिंहांशके जीवे कलिंगे गौडगुर्जरे ॥
कालमृत्युरयं योगो दंपत्योर्निधनप्रदः ॥ २७ ॥
मृगेंद्रमध्यमांशस्थे जीवे योगोऽशनिस्त्वयम् ॥
गौतमीयाम्यभागे तु दम्पत्योर्निधनप्रदः॥ २८ ॥
योगत्रयं वर्जनीयं चोक्तदेशेषु सर्वदा ॥
उद्वाहेष्वन्यदेशेषु नात्यर्थं मंगलप्रदम् ॥ २९ ॥

अर्कवारेऽग्निपंचम्योः सोमे चित्राद्वितीययोः ॥
कुजे पूर्णेन्दुरोहिण्योः सप्तमीयाम्ययोर्बुधे ॥ ३० ॥
गुरौ मित्रत्रयोदश्योः षष्ठश्रवणयोः सिते ॥
पौष्णाष्टम्यां शनियुते योगा हालाहलाभिधाः ॥ ३१ ॥
एषु योगेषु कर्तव्यं मारणं शत्रुसंज्ञके ॥
विवाहादिषु कार्येषु नियतं निधनप्रदम् ॥ ३२ ॥
प्रतिपद्यंबुनक्षत्रे पंचम्यां वह्निभे सति ॥
अष्टम्यामजपाद्विष्ण्ये दशम्यां ब्रह्मभे यदि ॥ ३३ ॥
द्वादश्यां सार्पनक्षत्रे त्रयोदश्यर्यमर्क्षयोः ॥
नक्षत्रलांछितो योगो देवानामपि नाशदः ॥ ३४ ॥
चतुर्दशी चतुर्थी च अष्टमी नवमी तथा ॥
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयाः क्रमात् ॥ ३५ ॥
क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः ॥
भूताष्टमनुतत्वांकदश शेषास्तु शोभनाः ॥ ३६ ॥
दोषनाडीषु यत्कर्म शुभं सर्वं विनश्यति ॥
विवाहे विधवा नारी व्रात्यः स्याच्चोपनायने ॥ ३७ ॥
सीमंते गर्भनाशः स्यात्प्राशने मरणं ध्रुवम् ॥
अग्निना दह्यते क्षिप्रं गृहारंभे विशेषतः ॥ ३८ ॥
राजराष्ट्रविनाशः स्यात्प्रतिष्ठायां न संशयः ॥
किमत्र बहुनोक्तेन कृतं कर्म विनश्यति ॥ ३९ ॥
द्विदैवमित्रचांद्रेन्द्रवह्निसार्पभतारकाः ॥
रविवारेण संयुक्ता वर्जनीयाः प्रयत्नतः ॥ ४० ॥
आषाढद्वयवह्नीज्यद्विदैवपितृतारकाः ॥
सोमवारेण संयुक्ताः शुभकर्मविनाशदाः ॥ ४१ ॥
ज्येष्ठाजपादश्रवणधनिष्ठार्द्राहितोयपाः ॥

भौमवारेण संयुक्ताः सर्वमंगलनाशदाः ॥ ४२ ॥
अश्विनीभरणीमूलपौष्णवस्वार्द्रतारकाः ॥
बुधवारेण संयुक्ताः सर्वशोभननाशदाः ॥ ४३ ॥
अर्यमारोहिणीत्वाष्ट्रधातृचंद्राख्यतारकाः ॥
गुरुवारेण संयुक्ताः शोभने निधनप्रदाः ॥ ४४ ॥
सार्पद्विदैवमित्रेंदुरोहिणीपितृतारकाः ॥
शुक्रवारेण संयुक्ता वर्जनीयाश्च मंगले ॥ ४५ ॥
उत्तराफाल्गुनीपौष्णभेज्यादित्यार्कवैष्णवाः ॥
शनिवारेण संयुक्ताः सर्वशोभनगर्हिताः ॥ ४६ ॥
एषु योगेषु तत्सर्वं कृतं कर्म विनश्यति ॥
विवाहे विधवा नारी व्रती पातककृद्भवेत् ॥ ४७ ॥
वारेशे बलसंयुक्ते योगास्त्वेते बलप्रदाः ॥
न किंचिद्दोषदास्तस्मिन्बलहीने न संशयः ॥ ४८ ॥
हस्तवासवयोराद्यं विशाखार्द्राद्वितीयकम् ॥
तृतीयकमहिर्बुध्न्ये चांत्यांशं यममूलयोः ॥ ४९ ॥
दिवा मृत्युप्रदाः पादा दोषास्त्वेते न रात्रिषु ॥
शुभकार्य्ये प्रसूतौ च सर्वदा परिवर्जयेत् ॥ ५० ॥
अश्विसार्पभयोराद्यं द्वितीयं यममूलयोः ॥
तृतीयं त्र्युत्तराहर्य्योर्वाक्त्रिदोरंत्यपादकः ॥ ५१ ॥
दिवायोगा इति ख्याताः शोभने रोगदाः सदा ॥
दिवारोगप्रदास्त्वेते न तु रात्रौ कदाचन ॥ ५२ ॥
तस्माद्दिवैव संत्याज्या रोगमृत्युप्रदायकाः ॥
दिवाऽपि दोषदा नैव रवीन्दोर्बलयुक्तयोः ॥ ५३ ॥
वारानर्कोदितस्त्रिघ्नाः शोधयेच्चक्रधिष्ण्यतः ॥
ततो भवार्कपट्टतारा क्रमात्काणांधबाधिराः ॥ ५४ ॥

द्विदैवधातृवह्न्यर्कवसुदैवतपैतृकाः ॥
अर्कवारेण संयुक्ता हालाहलविषोपमाः ॥ ५५ ॥
उत्तरात्रयचित्राख्यद्विदैवाह्यतारकाः ॥
सोमवारेण संयुक्ताः कालकूटविषोपमाः ॥ ५६ ॥
शतताराद्विदैवार्द्रा उत्तराषाढतारकाः ॥
आरवारेण संयुक्ता गुणघ्ना विषसंज्ञकाः ॥ ५७ ॥
अश्विनीभरणीवह्निवसुमूलाद्यतारकाः ॥
बुधवारेण संयुक्ता दोषाः सर्वाह्वयास्त्वमी ॥ ५८ ॥
भचतुष्कं वह्निधिष्ण्याद्रुणार्यमतारकाः ॥
गुरुवारेण संयुक्ता दोषा मंगलनाशदाः ॥ ५९ ॥
शक्रसार्पमघावह्निद्विदैवाळुततारकाः ॥
शुक्रवारेण संयुक्ता महादोषाह्वयास्त्वमी ॥ ६० ॥
अर्यमादितिपौष्णार्कविश्वापाढाख्यतारकाः ॥
शनिवारेण संयुक्ता दोषा गुणविमर्दनाः ॥ ६१ ॥
त्रयोदशलवैर्युक्तः सूर्यो राशिचतुष्टयः ॥
तदा धूमाह्वयो योगः सर्वशोभननाशदः ॥ ६२ ॥
धूमे मंडलतः शुद्धे व्यतीपातोऽपरो विषः ॥
व्यतीपाते च षड्राशियुक्तोऽसौ परिवेषकः ॥ ६३ ॥
परिवेषे चक्रयुक्ते विषदोषो धनुर्द्धरः ॥
अत्यष्टिभागयुक्तेऽस्मिन्केतुसंज्ञोऽपरो विषः ॥ ६४ ॥
एवं पंचार्कदोषाः स्युश्चतुर्मुखमुखोदिताः ॥
पंचदोषेषु संयुक्तेष्विनेंदूदयराशिषु ॥ ६५ ॥
विवाहे विधवा नारी प्रतिष्ठायां कुलक्षयः ॥
द्वितीये जन्मनि व्रात्यः सीमंते गर्भनाशनम् ॥ ६६ ॥
नवान्नभोजने मृत्युश्चौले व्याधिर्भवेत्तदा ॥

तस्मात्पंचार्कदोषास्ते वर्जनीयाश्च मंगले ॥ ६७ ॥
जीवराशिर्द्वितीयायां चतुर्थ्यां घटतावुरी ॥
षष्ठ्यां च मेषसिंहाख्यावष्टम्यां बुधसद्मनि ॥ ६८ ॥
दशम्यां सिंहकीटाख्यौ द्वादश्यां मृगजूकभे ॥
एते मृत्युप्रदा योगाः शोभनेष्वतिगर्हिताः ॥ ६९ ॥
मृगसिंहौ तृतीयायां प्रथमायां तुलामृगौ ॥
पंचम्यां बुधराशी द्वौ सप्तम्यां चापचंद्रभे ॥ ७० ॥
नवम्यां सिंहकीटाख्यावेकादश्यां गुरो गृहे ॥
वृषमीनौ त्रयोदश्यां दग्धसंज्ञास्त्वमी गृहाः ॥ ७१ ॥
दग्धसद्मानि यत्कर्म कृतं सर्वं विनश्यति ॥
तस्माद्दग्धा गृहास्त्याज्याः शोभनेष्वखिलेष्वपि ॥ ७२ ॥
महागणितमार्गस्थो व्यतीपातोऽत्र दोषदः ॥
बलवद्गुणसंपन्नोऽप्यसौ कुलविनाशदः ॥ ७३ ॥
अश्विनी रोहिणी चैत्रे शून्यभे परिकीर्तिते ॥
चित्रास्वाती च वैशाखे ज्येष्ठे विश्वाख्यतारकाः ॥ ७४ ॥
भगवासवमाषाढे श्रावणे हारिविश्वभम् ॥
नभस्ये वारुणांत्यर्क्षमजपादश्वयुज्यपि ॥ ७५ ॥
कार्तिके पितृवस्वृक्षे सौम्ये चित्रादिदैवते ॥
पौषे दस्रकरार्द्राः स्युर्माघे मूलं च विष्णुभम् ॥ ७६ ॥
तपस्ये शक्रभरणी शून्यभान्याहुरग्रजाः ॥
एषु येन कृत कर्म धनैः सह विनश्यति ॥ ७७ ॥
अष्टमी नवमी चैत्रे पक्षयोरुभयोरपि ॥
माधवे द्वादशी त्याज्या पक्षयोरुभयोरपि ॥ ७८ ॥
ज्येष्ठे त्रयोदशी निंद्या सिते कृष्णे चतुर्दशी ॥
आषाढे कृष्णपक्षे च षष्ठी सप्तम्यसत्प्रदा ॥ ७९ ॥

द्वितीया च तृतीया च श्रावणे सितकृष्णयोः ॥
प्रथमा च द्वितीया च नभस्ये मासि निंदिता ॥ ८० ॥
दशम्येकादशी निन्द्या मासीषे शुक्लकृष्णयोः ॥
ऊर्जे चतुर्दशी शुक्लकृष्णपक्षे च पंचमी ॥ ८१ ॥
सप्तमी चाऽष्टमी सौम्ये पक्षयोरुभयोरपि ॥
पौषे पक्षद्वये चैव चतुर्थी पंचमी तथा ॥ ८२ ॥
माघे तु पंचमी षष्ठी शुक्ले कृष्णे यथाक्रमात् ॥
तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः ॥ ८३ ॥
तिथयो मासशून्याख्याः शुभकर्मविनाशदाः ॥
आसु श्राद्धादि कुर्वीत नैव मंगलमाचरेत् ॥ ८४ ॥
घटमत्स्यवृषा युग्ममेषकन्याः सवृश्चिकाः ॥
तुलाचापकुलीराख्यमृगसिंहाख्यराशयः ॥ ८५ ॥
चैत्राद्या मासशून्याख्या वंशवित्तविनाशदाः ॥
तस्मात्तान्संपरित्यज्य शोभनं कारयेत्सुधीः ॥ ८६ ॥
दिव्यान्तरिक्षभौमाश्च उत्पाताः त्रिविधाः स्मृताः ॥
षण्मासं तदुडु त्याज्यं सप्ताहं च तदादितः ॥ ८७ ॥
उत्पातदिनं संत्याज्यं नवमं च विशेषतः ॥
तयोः कृतं शुभं कर्म नाशमाप्नोति शीघ्रतः ॥ ८८ ॥
विद्युत्स्पृग्दिवसं त्याज्यमवमं च विशेषतः ॥
तयोः कृतं शुभं सर्वं नाशमाप्नोति शीघ्रतः ॥ ८९ ॥
नृपसंन्यासिविद्वांसो यज्ञकृद्देवचित्तमाः ॥
एतेषां मरणे त्याज्यं त्रिदिनं शोभनेषु च ॥ ९० ॥
अब्दास्तु त्रिविधा जीवसौरचंद्राह्वयाः सदा ॥
तेषामादौ तथा चांते त्रिदिनं वर्जयेच्छुभे ॥ ९१ ॥
पूर्वतः परतः सूर्यसंक्रातेश्च विवर्जयेत् ॥

मंगलेषु सदा दुष्टा नाड्यः षोडश षोडश ॥ ९२ ॥
दिनमेकं सदा त्याज्यमयने विषुवद्वये ॥
संक्रांतिदिनमप्येवं ज्ञातव्यं मंगलेष्वपि ॥ ९३ ॥
महापातौ वैधृतिश्च उपरागसमः सदा ॥
तस्माद्दिनत्रयं त्याज्यं तच्च पूर्वापरं दिनम् ॥ ९४ ॥
उपग्रहमहादोषा भूमिकंपादयश्च ते ॥
मंगलेषु सदा त्याज्याः कालकूटविषोपमाः ॥ ९५ ॥
कंपं कंपयति स्थानमुल्का दहति नाकुलम् ॥
दंडे स्वामिविनाशः स्याद्ध्वजः सर्वविनाशकृत् ॥ ९६ ॥
ग्रहणं द्युनिशोर्मध्ये संध्ययोर्वा भवेद्यदि ॥
उभयत्रापि दोषः स्यात्पश्चादेव न तत्र तु ॥ ९७ ॥
अर्कारसितसौम्यार्यमंदा यद्येकराशिगाः ॥
कंटकाख्यो महादोषः सर्वकर्मविनाशकृत् ॥ ९८ ॥
अकालवृष्टिनीहारपरिवेषशरासनाः ॥
लतापातादयो दोषाः शुभकार्यविनाशदाः ॥ ९९ ॥
रूपादिबलसंपूर्णा ग्रहेंद्रा बलिनः सदा ॥
शीघ्रगाश्चाग्रगा भानो रश्मिभिर्बलवत्तराः ॥ १०० ॥
पृष्ठतो रश्मिहीनाः स्युर्व्यत्ययान्मंदचारिणः ॥
शशितो बलवान्सूर्य्यः सर्वकार्येषु सर्वदा ॥ १ ॥
सूर्य्यस्य राशिर्ज्वलितो भस्मसंज्ञं तु पृष्ठभम् ॥
अग्रभं धूमसंज्ञं तु तस्माद्भत्रितयं त्यजेत् ॥ २ ॥
यत्तद्राशिकृतं यत्तच्छुभं सर्वं विनश्यति ॥
भस्मधूमाह्वयं राशिद्वयं श्रेष्ठं शुभैर्युतम् ॥ ३ ॥
शून्याधिमासद्वितयं गडांतं त्रिविधं सदा ॥
महापातत्रयं दुष्टं भसंधित्रितयं भृशम् ॥ ४ ॥

सग्रहः कर्त्तरीसूर्यसंक्रांतिविषनाडिकाः ॥
ग्रहणोभयतो दोषो दुःक्षणः कुनवांशकः ॥ ५ ॥
पापविद्धाधिष्ठितभं खार्जूरिकसमांघ्रिभम् ॥
कुजाष्टमः सितारिस्थः चंद्रः षष्टाष्टरिःफगः ॥ ६ ॥
पंचांगशुद्धिरहितश्चोत्पाताकालवृष्टिजाः ॥
एकविंशन्महादोषास्त्वंते ब्रह्ममुखोदिताः ॥ ७ ॥
कदाचिन्नैव सीदंति गुणानां कोटिकोटिभिः ॥
तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् ॥ ८ ॥
विवाहे विधवा नारी मरणं व्रतबंधने ॥
ग्रामनाशः प्रतिष्ठायां सीमंते गर्भनाशनम् ॥ ९ ॥
नवान्नभोजने मृत्युः कूपो तत्फलनाशनम् ॥
कर्तृनाशो गृहारंभे प्रवेशे पतिनाशनम् ॥ ११० ॥
यात्रायां कर्त्तृनाशः स्याद्युद्धयाने विशेषतः ॥
लभ्यते सुमहापुण्यमेषु श्राद्धादिकर्मभिः ॥ ११ ॥
ज्येष्ठं ज्येष्ठाग्रजो हंति द्वितीयेऽप्यथ सोदरम् ॥
तृतीये मातरं हंति स्वयं जातश्चतुर्थके ॥ १२ ॥
ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाग्रजम् ॥
ज्येष्ठांत्यपादजातस्तु पितृनाशाय जायते ॥ १३ ॥
ज्येष्ठं ज्येष्ठाद्यपादे तु हंति बालो न बालिका ॥
सा बालिका तु मूलर्क्षे पितरं मातरं तथा ॥ १४ ॥
वासवे प्रथमे पादे द्वितीये च तृतीयके ॥
स्वल्पदोष इति प्रोक्तं पितरं हंति तुर्यके ॥ १५ ॥
वासवर्क्षेचतुर्थांशे पुत्री पुत्रस्तु जायते ॥
पीडारिष्टनिवृत्त्यर्थं शांतिं कुर्याच्च मूलवत् ॥ १६ ॥
नैर्ऋत्यभोद्भवसुतः सुता वा क्षिप्रं त्ववश्यं श्वशुरं निहंति ॥

तदंत्यपादाज्जनिता निहंति नैवोत्क्रमेणाहिभवः कलत्रम् ॥ १७ ॥
सर्पेशताराजनिता धवाग्रजं द्विदैवताराजनिता तु देवरम् ॥
पुरंदरर्क्षाज्जनितः सुतस्तदा स्वस्याग्रजं हंति न पुत्रिका यदि ॥ १८ ॥
हंति ज्येष्ठांत्यपादोत्थः स्वज्येष्ठं नैव कन्यका ॥
विप्रेभ्यो गोत्रयं दद्यात्तद्दोषशमनाय वै ॥
अशक्तो गोद्वयं दद्याद्गामेकां वापि भक्तितः ॥ १९ ॥
भौजंगपौरंदरपौष्णभानां तदग्रभानां च यदंतरालम् ॥
अभुक्तसंज्ञं प्रहरप्रमाणं त्यजेत्सुतं तत्र भवां सुतां च ॥ १२० ॥
मूलाद्यपादजनितः पितरं निहंति द्वितियतः स्वजननीं त्रिपदोऽर्थवृंदम् ॥
तुरीयजः शुभकरः फलमेतदेव वैलोमतो भुजगधिष्ण्यभवस्य सर्वम् २१
नैर्ऋत्यभौजंगमगंडदोषनिवारणायाभ्युदयाय नूनम् ॥
पितामहोक्तां रुचिरां च शांतिं प्रवच्मि दैवज्ञहिताय सम्यक् ॥ २२ ॥
चित्राद्यर्द्धे पुष्यमध्ये द्विपादे पूर्वापाढाधिष्ण्यपादे तृतीये ।
जातः पुत्रश्चोत्तराद्ये विधत्ते मातापित्रोर्भ्रातरं चात्मनाशम् ॥ २३ ॥
द्विमासस्योत्तरादोषः पुष्ये चैव त्रिमासकः ॥
पूर्वाषाढाष्टमे मासि चित्राषाण्मासिकं फलम् ॥ २४ ॥
नवमासं तथाश्लेषां मूले चाष्टमवर्षके ॥
ज्येष्ठा पंचदशे मासि पुत्रदर्शनवर्जिताः ॥ २५ ॥
ज्येष्ठांत्यपादघटिकामितमेव केचिन्मूलं ह्यभुक्तमपरे पुनरामनंति ॥
मूलाद्यपादघटिकाद्वितयेन सार्द्धमष्टौ समा परिहरेदिह जन्मभाजम् २६
अभुक्तमूलव्यतिरिक्तगंडदोषेषु शांतिं विदधीत धीमान् ॥
शास्त्रोक्तरीत्या खलु सूतकांते मासे तृतीयेऽप्यथ वत्सरान्ते ॥ २७ ॥
मातृगंडसुते ताते सूतकान्ते विचक्षणाः ॥
कुर्याच्छान्तिं तादृशे वा तद्दोषस्यापनुत्तये ॥ २८ ॥
मूलाद्यपादो दिवसे यदि स्यात्तज्जः पितुर्नाशनकारणं स्यात् ॥

द्वितीयपादो यदि रात्रिभागे तदुद्भवो मातृविनाशकः स्यात् ॥ २९ ॥
मूलाद्यपादो यदि रात्रिभागे तदात्मनो नास्ति पितुर्विनाशः ॥
द्वितीयपादो दिनगो यदि स्यान्न मातुरल्पोऽपि तदास्ति दोषः॥ १३०॥

अथ गंडदोषशांतिविधिः ।

ईशान्यामथवा प्राच्यामुदीच्यां दिशि कल्पयेत् ॥
मंडपं चाष्टभिर्हस्तैश्चतुर्भिर्वासमंततः ॥ ३१ ॥
कदलीस्तंभसंयुक्तमाम्रपल्लवराजितम् ॥
पुष्पमालायुतं सम्यक् तूर्यघोषनिनादितम् ॥ ३२ ॥
चतुर्द्वारसमायुक्तं तोरणाद्यैरलंकृतम् ॥
पिष्टेन कल्पयेत्सर्वं तथा गोमयमंडले ॥ ३३ ॥
कुंडं च तद्बहिः कार्य्यं ग्रहयज्ञोक्तमार्गतः ॥
पंचामृतं पंचगव्यं पंचत्वक्पल्लवानि च ॥ ३४ ॥
रोचनं कुंकुमं शंखं गजदंतं च गुग्गुलम् ॥
सर्वैजाश्च शतौषध्यः सुगन्धकलमृत्तिकाः ॥ ३५ ॥
शतच्छिद्रं बृहत्कुंभं शिरोदेशे च धारयेत् ॥
ततो राज्याभिषेकं च कुर्य्यादाचार्यकोविदः ॥ ३६ ॥
आदाय चतुरः कुंभानाचार्यो वेदपारगः ॥
निनयेयुर्बृहत्कुंभमाल्लिंगैर्जलमंत्रकैः ॥ ३७ ॥
स्नातुर्नीराजनं कुर्य्याच्चित्रान्नैर्दीपमालिकैः ॥
कुंकुमं माल्यांबरौ दत्त्वा प्रार्थयेन्निर्ऋतिं द्विजान् ॥ ३८ ॥
अनेन सुकृतेनैव निर्ऋतिः प्रीयतामिति ॥
गृहीत्वा सुकृतं तेभ्यः पूजाहोमजपादिकम् ॥ ३९ ॥
आचार्याय वृषं दद्याल्लोहपिंडं सदक्षिणम् ॥
प्रतिमां वसुसंयुक्तां बीजान् शक्त्यनुसारतः ॥ १४० ॥
आचार्य्येभ्यो ब्राह्मणेभ्यो दद्याद्वित्तानुसारतः ॥

द्वारांगजापकेभ्यश्च भयलोभविवर्जितः ॥ ४१ ॥
श्रोत्रियाय विशिष्टाय ब्राह्मणाय कुटुंबिने ॥
वस्त्रालंकारसंयुक्तां धेनुं दद्यात्सदक्षिणाम् ॥ ४२ ॥
ब्राह्मणान्भोजयेत्पश्चादाशीर्वादपुरःसरम् ॥
एवं यः कुरुते शांतिं गंडदोषात्प्रमुच्यतेः ॥ ४३ ॥
एतत्सर्वं सार्पभेऽपि समानं किंचिदुच्यते ॥
सार्पेभ्यः स्वाहेति मंत्रमुखान्ते जुहुयात्ततः ॥ ४४ ॥
आश्लेषाभ्याः स्वाहा दंदशूकेभ्यः स्वाहेति ॥ उपहोममंत्रौ ।
इदं सर्पेभ्य इति वाक्यैः पूर्वदृष्टिभिः ॥ ४५ ॥
एषामास्तीकऋषिस्त्रिष्टुप्छंदोऽस्य देवताः ॥
नमोस्तु सर्पेभ्य इत्युपचाराश्च पूर्ववत् ॥ ४६ ॥
अस्य मंत्रस्य बृहती छंदः सर्पाधिदेवता ॥
आस्तीकऋषिमंत्रोऽयं सर्वदुःखविनाशदः ॥ ४७ ॥
पितामहानुसारेण चोक्तं दोषनिरूपणम् ॥
गुणापवादमधुना कथ्यते च पृथक् पृथक् ॥ १४८ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठ वि० संहितायां दोषनिरूपणाध्यायो द्वाचत्वारिंशः४२

---

## अथ दोषापवादाध्यायः ४३.

अथातः संप्रवक्ष्यामि दोषाणामपवादकम् ॥
अध्यायं तं हितार्थाय देवज्ञानां च सुंदरम् ॥ १ ॥
अधर्मेण जितो धर्मः पुण्यं पापचयेन च ॥
यद्वत्कलियुगे तद्वद्दोषेण गुणसंचयम् ॥ २ ॥
नामनिर्देशतो यत्र चैव दोषस्त्विदं गुणम् ॥
हंति तत्रैव सान्यत्र प्रशंसा परमस्य वै ॥ ३ ॥
वारयोगगुणं हंति योगश्चोत्पातसंज्ञितः ॥

अतिसर्वगुणोपेतमाधिं कायं यथा तथा ॥ ४ ॥
श्रेष्ठयोगं यथा हंति मृत्युयोगो महाबलः ॥
संपूर्णगुणिनं यद्वत्सर्पस्तु मूषकं यथा ॥ ५ ॥
शुभयोगं निहंत्याशु त्वचयोगो महाबलः ॥
यथा कृष्णमृगं साधु शार्दूलस्त्वतिगर्वितः ॥ ६ ॥
हंति कल्याणयोगाख्यं काणयोगो महाबलः ॥
प्रभंजनो यथा तूलराशिं पटतरस्तथा ॥ ७ ॥
वर्द्धमानाह्वयं योगं पंगुयोगो निहंति वै ॥
अन्नं सुगुणसंपन्नमुग्रा विषलवा यथा ॥ ८ ॥
सुधायोगान्निहंत्येव बधिरो योगचंचलः ॥
वृकोऽजसामितिं यद्वत्तद्वदेवाचिराद्ध्रुवम् ॥ ९ ॥
बलिनं गुणसंपन्नं महायोगं निहंति वै ॥
दग्धयोगो यथा मेहः शरीरमचिराद्ध्रुवम् ॥ १० ॥
सुवर्णगंधपुष्पाणि रक्तगंधोदकानि च ॥
सुवर्णेन प्रमाणेन तदर्द्धार्द्धेन वा पुनः ॥ ११ ॥
निर्ऋतिप्रतिमां कुर्य्याद्वित्तशाठ्यविवर्जितः ॥
वस्त्राणि षोडशाष्टौ वा शुक्लसूक्ष्माण्यतंद्रितः ॥ १२ ॥
ब्राह्मणान्वरयेत्पश्चात्स्वस्तिवाचनपूर्वकम् ॥
प्रधानाचार्यमेतेषां श्रेष्ठं तत्प्रतिमार्चने ॥ १३ ॥
ईशानादिषु कोणेषु चतुरः कलशार्चने ॥
एवं पृथक्पृथग्वापि मधुपर्कसमन्वितान् ॥ १४ ॥
द्वारेषु जापकानष्टौ पूर्ववच्चांगजापकान् ॥
ईशानादिषु कोणेषु कलशाञ्जलपूरितान् ॥ १५ ॥
पूर्वोक्तद्रव्यसंयुक्ताञ्छुक्लवर्णान्सुशोभनान् ॥
तंडुलोपरि संस्थाप्य चोपचारैः प्रपूजयेत् ॥ १६ ॥

अब्लिंगैर्वारुणैर्मन्त्रैः शुक्लपुष्पाक्षतादिभिः ॥
ततः कुंभजलं स्पृष्ट्वा कुशकूर्चैर्जपादिकान् ॥ १७ ॥
भद्रभक्तं च भद्राग्नेरानो भद्रा इति क्रमात् ॥
पुरुषसूक्तं च तन्मंत्रैर्देवान्ध्यात्वाप्यतंद्रितः ॥ १८ ॥
प्रसिद्धा रुद्रसूक्तस्य ऋषिश्छंदोऽधिदेवता ॥
भद्राग्ने इति सूक्तस्य आद्यचौ द्वे जपोत्यकौ ॥ १९ ॥
ततो दशर्चानुष्टुभो वामदेवोऽग्निदेवता ॥
आनोभद्रास्य सूक्तस्य आद्याः पंच च सप्त च ॥ २० ॥
जगत्यश्च विराट् चैव शेषास्तिस्रस्त्वनुष्टुभः ॥
राहूगणसुतश्चैव गौतमश्च ऋषी स्मृतौ ॥ २१ ॥
देवताश्च तथा विश्वेदेवताश्च प्रकीर्तिताः ॥
चतुर्दशानुष्टुभास्तु पुरुषसूक्तस्य चोदिताः ॥ २२ ॥
ऋचौ द्वे त्रिष्टुभौ ज्ञेयौ ऋषिर्नारायणः स्वयम् ॥
सूक्तं नारायणः साक्षाद्देवतापरपूजकः ॥ २३ ॥
शतच्छिद्रं बृहत्कुंभं स्थापयेन्मध्यतस्ततः ॥
तत्पश्चान्निर्ऋतिदेवमर्चयेत्पश्चिमामुखम् ॥ २४ ॥
मोषुणस्त्विति मंत्रेण शुक्लवस्त्राक्षतादिभिः ॥
मोषुणस्त्विति मंत्रस्य ऋषिः प्रस्कण्वसंज्ञकः ॥ २५ ॥
निर्ऋतिर्देवताछंदो गायत्री क्लेशनाशिनी ॥
करालवदनं कृष्णं खड्गचर्मधरं तनुम् ॥ २६ ॥
ऋग्यजुःसामवेदांश्च जपेद्द्वारेषु पूर्वतः ॥
अथर्वणं तथोदीच्यां नियतात्मा ह्यतंद्रितः ॥ २७ ॥
षडङ्गजापकस्तत्र तत्तन्मंत्रं जपेत्ततः ॥
तत्तन्मंत्रैर्ग्रहान्सर्वान्लोकपालान्समर्चयेत् ॥ २८ ॥
अष्टोत्तरसहस्रं वा शतं वा नियतात्मवान् ॥

मूलं प्रजामिति मंत्रद्वयस्य प्रस्कण्वको ऋषिः ॥ २९ ॥
निर्ऋतिर्देवता त्रिष्टुप्छंदः पापविमोचनम् ॥
मूलं प्रजामित्यष्टौ वाक्येनार्चयेद्विनियोगतः ॥ ३० ॥
स्वगृह्योक्तविधानेन कुंडेऽग्निं स्थापयेत्ततः ॥
प्रजापतये स्वाहेति मुखांते जुहुयाच्चरुम् ॥ ३१ ॥
मूलाय स्वाहा प्रजापतये स्वाहेत्युपहोममंत्रौ ॥
पायससमिदाज्येन चरुणामष्टसहस्रकम् ॥ ३२ ॥
अथवाष्टोत्तरशतं प्रत्येकं जुहुयात्ततः ॥
मूलं प्रजामित्यष्टभिर्वाक्यैर्मंत्रद्वयेन च ॥ ३३ ॥
सावित्रसौम्यनैर्ऋत्यमंत्रैरश्वत्थसंभवैः ॥
समिद्भिश्च तिलव्रीहीन्हुत्वा व्याहृतिभिस्ततः ॥ ३४ ॥
जपादींश्च ततः कर्ता भक्त्या पूर्णाहुतिं स्वयम् ॥
ततो मंगलघोषैश्च स्नानकर्मसमाचरेत् ॥ ३५ ॥
आद्यपादे पितृगंडे त्रयाणामभिषेचनम् ॥
इतरत्र शिशोर्मातुरभिषेकं समाचरेत् ॥ ३६ ॥
अहुजन्मभयोगोऽयं पूर्णयोगं निहंति हि ॥
यथा गोसमितिं व्याघ्रश्चोद्धतः खलसंयुतः ॥ ३७ ॥
अचिकित्सगदायोगः शुभयोगं निहंतिवै ॥
यथा काकः पुरोडाशं तथैव तमशोभनम् ॥ ३८ ॥
ग्रहैः कृतो मृत्युयोगो निहंत्यमृतसंज्ञकम् ॥
योगो गुणान्महानन्यान्पावको विपिनं यथा ॥ ३९ ॥
अग्निजिह्वाह्वयो योगः पद्मयोगश्च तद्गुणान् ॥
अन्यान्हंत्यचिरादेव नकुलः पन्नगं यथा ॥ ४० ॥
विषयोगो निहंत्याशु योगं त्वानंदसंज्ञकम् ॥
उग्रोद्भवान्गुणानन्यान्व्याघ्रः कृष्णमृगं यथा ॥ ४१ ॥

अर्द्धयामभांतरालं तद्वद्योगांतरात्मकम् ॥
मासांते त्रिदिनं दोषमब्दांते पक्षमेव च ॥ ४२ ॥
योगांतरालदोषो यः सहस्रं गुणसंचयम् ॥
ऋक्षांतरालदोषो यस्त्वयुतं गुणसंचयम् ॥ ४३ ॥
मासांतदोषस्त्वचिराद्गुणकोटिं निहंत्यथ ॥
गुणानामयुतं हंति वर्षांते पक्षदोषकः ॥ ४४ ॥
उपप्लवभवो दोषो हंत्यत्र गुणसंचयम् ॥
तद्धिष्ण्योत्पातजो दोषः कर्तुरर्थविनाशदः ॥ ४५ ॥
महाशूलाह्वयो योगः सिद्धियोगं निहंति वै ॥
स्वर्भानुर्बलसंपन्नः[1] शशांकं बलिनं यथा ॥ ४६ ॥
यथा पीयूषयोगाख्यं दुष्टयोगो बलाधिकः ॥
दावाग्निर्विपिनं सर्वं नानातरुविमंडितम् ॥ ४७ ॥
कपिलाख्यं महायोगं बलिनं दोषकंपनम् ॥
हंत्येव शकटो योगस्त्वनृतं सुकृतं यथा ॥ ४८ ॥
अशानिर्नामऽयोगो यः समुद्रं योगवल्लभम् ॥
राघवाग्निशरो यद्वदुदधेः शंबरं यथा ॥ ४९ ॥
समसप्तकयोर्जीवशुक्रयोश्च परस्परम् ॥
तदा मूढसमो दोषः शुभकार्य्यविनाशदः ॥ ५० ॥
तुंगमित्रस्वर्क्षगयोस्तयोर्वा तत्तदंशयोः ॥
तदा मूढसमो दोषो नाशं याति न संशयः ॥ ५१ ॥
महाकुलिकयोगश्च वापी योगं निहंति हि ॥
अन्यान्महागुणांश्चापि पावकस्त्विंधनं यथा ॥ ५२ ॥
हंति योगं मौसलाख्यं योगो हालाहलाह्वयः ॥
लग्नोद्भवान्गुणानन्यान्कितवोऽष्टापदं यथा ॥ ५३ ॥

१ ' कर्कारुबलसम्पन्नः ' इति क्वचित् पाठः ।

नक्षत्रलांछितो योगः स्वयोगं हन्ति सर्वदा ॥
अन्यान्हंति गुणानुग्रान्स्वैरिणी स्वकुलं यथा ॥ ५४ ॥
पुंडरीकं महायोगं पक्षच्छिद्रोत्थनाडिका ॥
हंति पक्षिगणं श्येनो यद्वत्तद्वन्न संशयः ॥ ५५ ॥
गुणशेखरयोगाख्यं भानुवारादिसंभवाः ॥
पापयोगा यथा घ्नंति पुरुषं स्त्रीरजस्तथा ॥ ५६ ॥
दिवैव मृत्युदो मृत्युयोगोऽयं न च रात्रिषु ॥
हंति धूर्जटियोगं तु सन्निपातो यथा नरम् ॥ ५७ ॥
गुणभास्करयोगं तु दिवारोगप्रदो हि यः ॥
हंति रोगाह्वयो योगः स्त्रीसंगो मेहरोगिणम् ॥ ५८ ॥
गुणपार्श्वमहायोगं महाहालाहलो यथा ॥
हंति तारापतिं नूनं सैंहिकेयो महाबली ॥ ५९ ॥
तं चंद्रशेखरं योगं महाकाणांधबाधिराः ॥
घ्नंति योगा यथा मेघचयं चंडमहानिलः ॥ ६० ॥
गुणमर्दनयोगोऽयं योगं श्रीवत्ससंज्ञकम् ॥
हंति यद्वद्विप्रनिंदा स्वार्जितं धर्मसंचयम् ॥ ६१ ॥
अर्कादिवारसंभूताः कालकूटविषाह्वयाः ॥
घ्नंति योगाः सिंहयोगं गुरुर्निंदेव जीवितम् ॥ ६२ ॥
हंति शार्दूलयोगाख्यं धूमयोगो निकृष्टवान् ॥
क्रोधो हंति तपोराशिं चिरकालमुपार्जितम् ॥ ६३ ॥
व्यतीपातेंतरे दोषास्त्वब्दयोगं निहंति वै ॥
लग्नोद्भवान्गुणानन्यान्पांशुला स्वकुलं यथा ॥ ६४ ॥
रत्नमालाह्वयं योगं परिवेधोऽतिभीषणः ॥
हंति लग्नगुणानन्यान्गर्व्यं मद्यलवो यथा ॥ ६५ ॥
गणकल्पतरुं हंति दोषास्त्वब्दधनुस्तथा ॥

अश्मरी च महारोगस्त्वचिरात्तु शरीरिणम् ॥ ६६ ॥
केतुसंज्ञो महायोगो योगं गुणमणिं सदा ॥
भगंदरो महारोगो हंति द्राग्देहधारिणम् ॥ ६७ ॥
गुणार्णवं महायोगं हंति निर्घातसंज्ञकः ॥
योगो विभीषणाकारो मेहरोगो यथा नरम् ॥ ६८ ॥
सुदर्शनं महायोगं मेघदोषो निहंति वै ॥
अजीर्णरोगस्त्वत्यर्थमचिरान्मनुजोत्तमम् ॥ ६९ ॥
गुणसागरयोगाख्यं योगः कुलिकसंज्ञकः ॥
हंति यद्वद्वयोदोषः सर्वधातुचयं महत् ॥ ७० ॥
उल्कायोगो निहंत्याशु पुण्ययोगं महाबलम् ॥
स्नुहिवृक्षक्षीरलवः शरीरमिव निर्मलम् ॥ ७१ ॥
शुभयोगं निहंत्याशु विद्युद्दोषो महाबलः ॥
गुणानां निचयं वान्यं शुद्धान्नं लशुनं यथा ॥ ७२ ॥
सिद्धां तिथिं हंति सम्यक् पातश्चंडीशसंभवः ॥
महानन्यानन्गुणान्सर्वान्यथा श्वा हव्यसंचयम् ॥ ७३ ॥
विजयाख्यं महायोगं लत्तादोषो निहंत्यलम् ॥
लघोद्भवान्गुणानन्यानांत्रवृद्धिर्यथा तनुम् ॥ ७४ ॥
ब्रह्मदंडं महायोगं योगो निर्घातसंज्ञकः ॥
गुणानन्यान्निहंत्याशु क्षीरं मद्यलवो यथा ॥ ७५ ॥
कामधेनुं महायोगं क्षेपयोगो निहंति वै ॥
क्षयरोगो यथा नूनं शरीरं विपुलं शुभम् ॥ ७६ ॥
ब्रह्मदंडं महायोगं योगो निर्घातसंज्ञकः ॥
यथा हंति गुणान्सर्वान्पिशुनः स्नेहसंचयम् ॥ ७७ ॥
प्रभंजनं महायोगं योगः संवर्त्तसंज्ञकः ॥
हन्ति यद्वन्महावृक्षं कोटरस्थोऽनलो यथा ॥ ७८ ॥

इन्द्रदंडं महायोगं कालदंडो महाबलः ॥
हंति यद्वत्कफो रोगः शरीरं वज्रसन्निभम् ॥ ७९ ॥
इन्द्रदंडं महायोगं योगस्त्वेकार्गलाह्वयः ॥
हन्ति यद्वत्पूर्णगर्भं सन्निपातज्वरो यथा ॥ ८० ॥
अभिजित्संज्ञकं योगं गंडातयोगसंज्ञकः ॥
हंति यद्वन्मृगव्याधः पक्षिसंघमिवाखिलम् ॥ ८१ ॥
क्रूरग्रहैर्विद्धदोषो हंति गोधूलिकं शुभम् ॥
यद्वन्महोदरो रोगः कायं दृढतरं भृशम् ॥ ८२ ॥
अवमाख्या तिथिर्हंति सौम्यग्रहकृतं शुभम् ॥
लग्नलग्नांशकगुणान् राजयक्ष्मेव सत्तनुम् ॥ ८३ ॥
ग्रहजन्माह्वयो दोषो गुरुलग्नस्थितं शुभम् ॥
हंति तारापतिं यद्वत्सैंहिकेयो महाबलः ॥ ८४ ॥
प्रतिसूर्यो निहन्त्याशु यच्छुभग्रहजं शुभम् ॥
लग्नलग्नांशसंभूतं कुठारो विटपं यथा ॥ ८५ ॥
प्रतिचन्द्रो निहंत्याशु प्रतिशुक्रकृतं शुभम् ॥
लग्नषड्वर्गसंभूतं मेघसंघमिवानिलः ॥ ८६ ॥
परिवेषो निहंत्याशु लग्नलग्नांशजं गुणम् ॥
शुभग्रहकृतं सर्वं मक्षिका भोजनं यथाः ॥ ८७ ॥
नीहारदोषो हंत्याशु सौम्यग्रहकृतं शुभम् ॥
अपि लग्नकृतं श्राद्धं वृषलीपुत्रको यथा ॥ ८८ ॥
अकालवृष्टिजो दोषः सकलं गुणसंचयम् ॥
हंति यद्वत्पांशुलाख्या नितरां स्वकुलं महत् ॥ ८९ ॥
अकालगर्जितो दोषः सकलं गुणसंचयम् ॥
हंति यद्वन्मेघवृन्दं तारकामंडलं यथा ॥ ९० ॥
दिग्धूमदोषो हंत्याशु सकलं गुणसंचयम् ॥

यथा दुर्वाससः शापः सुरेन्द्रमिव गर्वितम् ॥ ९१ ॥
दग्धलग्नोद्भवो दोषः सकलं गुणसंचयम् ॥
हंति यद्वन्महावह्निरिन्धनानां च संचयम् ॥ ९२ ॥
शून्यधिष्ण्योद्भवो दोषः सकलं गुणसंचयम् ॥
हंति यद्वन्महावृष्टिः सकलं भूतसंचयम् ॥ ९३ ॥
दोषः शून्यतिथेर्जातः सकलं गुणसंचयम् ॥
हन्ति यद्वद्वैनतेयः सर्वं सर्पकुलं महत् ॥ ९४ ॥
ये मंडनाध्यायगुणापवादा दोषाश्च सर्वे त्विह चिन्तनीयाः ॥
गुणापवादं निखिलं समुक्त्वा दोषापवादं त्वधुनाऽभिधास्ये ॥ ९५ ॥
प्रबला अपि दोषास्ते सीदन्त्येव कलौ युगे ॥
पापरूपा यतो दोषाः पुण्यरूपाः सदा गुणाः ॥ ९६ ॥
एकं मृगं मृगी सूते पंच सूते वृकान्वृकी ॥
अतारो विलयं याति घनमाला यथा तथा ॥ ९७ ॥
आलस्योपहतः पादः पादः पाखंडमाश्रितः ॥
राजानं सेवते पादः पादः कृषिमुपाश्रितः ॥ ९८ ॥
एकं पादं त्रयः पादा भक्षयन्ति दिने दिने ॥
तथापि वर्द्धते पादः क्षीणं याति पदत्रयम् ॥ ९९ ॥
यथा दैत्या हता देवैस्तथा दोषा हता गुणैः ॥
विविधैर्योगजैः सौम्यखेटजैर्लग्नवर्गजैः ॥ १०० ॥
निर्देशान्नामतो यत्र नामं दोषमयं गुणैः ॥
तत्रैव हंति नान्यत्र प्रशंसाऽत्र परस्य च ॥ १ ॥
उत्पातयोगजं दोषं चरयोगो निहंति वै ॥
मत्तेभेन्द्रचयं यद्वत्पंचवक्रो महाबलः ॥ २ ॥
निहंति मृत्युयोगं तु श्रेष्ठयोगो महाबलः ॥
यथान्धकारं निबिडं भास्करस्योदयो यथा ३ ॥

अंधयोगकृतं दोषं शुभयोगो निहंति वै ॥
यथा हरिकथालापः पापं जन्मशतोद्भवम् ॥ ४ ॥
काणयोगकृतं दोषं हंति कल्याणसंज्ञकः ॥
स योगः शार्दूलमिव सर्वदा मृगसंहतिः ॥ ५ ॥
पंगुयोगं निहंत्याशु योगो वै वर्द्धमानकः ॥
काकानां संहतिं यद्वत्तद्वच्छ्येनो महाबलः ॥ ६ ॥
सुधायोगो निहंत्याशु योगं बधिरसंज्ञकम् ॥
भुजंगसंहतिं यद्वद्वैनतेयो महाबलः ॥ ७ ॥
महायोगो निहंत्याशु योगं तु राक्षसाह्वयम् ॥
दैत्यानां संहतिं यद्वच्छरो दाशरथेर्यथा ॥ ८ ॥
दग्धयोगं निहंत्याशु महायोगो महाबलः ॥
पंचाक्षरी महापापं कोटिजन्मकृतं तु यत् ॥ ९ ॥
ग्रहजन्मकृतं दोषं पूर्णयोगो निहंति वै ॥
महादावानलो यद्वद्विस्तृतं विपिनं भृशम् ॥ ११० ॥
गदायोगं निहंत्याशु शंखयोगो महाबलः ॥
आखूनां संहतिं यद्वन्मार्जारोऽमितविक्रमः ॥ ११ ॥
ग्रहैः कृतं मृत्युयोगं योगश्चामृतसंज्ञकः ॥
संजीवको गारुडाख्यो हंति यद्वद्विषोल्बणम् ॥ १२ ॥
अग्निजिह्वाख्यं योगं पद्मयोगो निहंति वै ॥
अधनं धनसंपन्नो गुरुः सर्वकुलं यथा ॥ १३ ॥
विषयोगं निहंत्याशु योगश्चानंदसंज्ञकः ॥
एकादशीव्रत यद्वत्पापं जन्मशतोद्भवम् ॥ १४ ॥
भांतरालकृतं दोषं सिद्धियोगो निहंति वै ॥
जीमूतसंचयं यद्वदनिलश्चोद्धतो भृशम् ॥ १५ ॥
योगांतरालकं दोषं हंति सिद्धातिथिः स्वयम् ॥

भागीरथीजलं यद्वदघं जन्मशतोद्भवम् ॥ १६ ॥
मासांते त्रिदिनं दोषो न नष्टो गुणकोटिभिः ॥
वर्षांते पक्षदोषोऽपि तद्वदेव न सीदति ॥ १७ ॥
उपप्लवर्क्षजो दोषश्चोत्पातर्क्षभवस्तथा ॥
पापविद्धर्क्षजः पापसंस्थभदोषसंचयः ॥ १८ ॥
एते दोषाश्च चत्वारो महाबलतरास्त्वमी ॥
सर्वदा नैव सीदंति गुणानां कोटिकोटिभिः ॥ १९ ॥
महाशूलाह्वयं योगं सिद्धियोगो निहंति वै ॥
कृष्णाष्टमीव्रतं यद्वत्पापं जन्मशतोद्भवम् ॥ १२० ॥
दुष्टयोगं निहंत्याशु योगः पीयूषसंज्ञकः ॥
सुदर्शनं महाचक्रं करोति दनुजक्षयम् ॥ २१ ॥
शकटाख्यं महायोगं कपिलो नामयोगराट् ॥
हंति मत्स्यध्वजं यद्वद्भवनेत्रोद्भवोऽनलः ॥ २२ ॥
समुद्रसंज्ञको योगो योगं त्वनिलसंज्ञकम् ॥
हंति यद्वन्महावायुर्वारिवाहचयं महत् ॥ २३ ॥
मृत्युतुल्यं महादोषं विनाशं कुरुते सदा ॥
तुंगमित्रस्वर्क्षसंस्थौ देवदैत्येन्द्रपूजितौ ॥ २४ ॥
महाकुलिकयोगं तु वापीयोगो निहंति वै ॥
सर्पाणां संहातिं यद्वन्महानकुलसंहतिः ॥ २५ ॥
हालाहलाह्वयं नामामृतयोगो निहंति वै ॥
भागीरथी यथा स्नानं पापं जन्मशतोद्भवम् ॥ २६ ॥
पक्षच्छिद्रोक्तनाडीनां दोषं हंति सदा तथा ॥
पुंडरीकाह्वयो योगः पिनाकी त्रिपुरं यथा ॥ २७ ॥
भानुवारादिसंभूतान्पापयोगान्निहंति वै ॥
स्वरयोगुणशेगोऽयं राघवो रावणं यथा ॥ २८ ॥

दिनेव मृत्युदं योगं हंति योगो महाबली ॥
धूर्जटी नाम योगोऽयं त्विधनं पावको यथा ॥ २९ ॥
दिनेव रोगदं योगं रोगं हंति महाबली ॥
गुणभास्करयोगोऽयं विपिनं पावको यथा ॥ १३० ॥
महाहालाहलं योगं गुणभास्करसंज्ञकः ॥
योगो हंति यथा तद्वत्कुमारस्तारकासुरम् ॥ ३१ ॥
चंद्रशेखरयोगोऽयं महाकाणाधवाधिरान् ॥
दोषान्हंति यथा तद्वद्वालिनं राघवो यथा ॥ ३२ ॥
गुणमर्दनयोगाख्यं योगः श्रीवत्ससंज्ञकः ॥
हंति यद्वन्महावृक्षान्प्रचंडः प्रबलोऽनिलः ॥ ३३ ॥
अर्कादिवारसंभूतान्कालकूटाख्ययोगकान् ॥
हंति यद्वत्सिद्धयोगः पापं पंचाक्षरी यथा ॥ ३४ ॥
धूमयोगं निहंत्याशु योगः शार्दूलसंज्ञकः॥
हंति यद्वद्विप्रमुख्यं पापः पातकसंज्ञकः ॥ ३५ ॥
उपग्रहाह्वयं दोषं सिद्धियोगो निहंति वै ॥
मर्दयतो बलातैलं वातरोगं यथा तथा ॥ ३६ ॥
इंद्रयोगो निहंत्याशु व्यतीपाताह्वयं सदा ॥
योगं यद्वद्ब्रह्मवादी द्वंद्वसंसारिकं सुखम् ॥ ३७ ॥
परिघाह्वयं योगं हंति यद्वन्महाबलम् ॥
रत्नमालाह्वयो योगः पिनाकी त्रिपुरं यथा ॥ ३८ ॥
गुणकल्पतरुर्योगः कुपुत्रः स्वकुलं यथा ॥
हंतींद्रधनुषं योगं महाबलवत्तरं शरम् ॥ ३९ ॥
पातसंज्ञं महादोषं हंति यद्वन्महाबली ॥
योगो गुणमणिः सर्वं प्रणवः पापसंचयम् ॥ १४० ॥
गुणार्णवमहायोगो हंति निर्घातसंज्ञकम् ॥

योगं यद्वत्पापचयं निरंतरहरिस्मृतिः ॥ ४१ ॥
सुदर्शनमहायोगो हंति निर्घातसंज्ञकम् ॥
हंति यद्वद्दुलमचयं प्रणाममिव शूलिनि ॥ ४२ ॥
गुणसागरयोगोऽयं योगं कुलिकसंज्ञकम् ॥
हंति यद्वन्महारोगं हिंग्वादिको महान्तु वै ॥ ४३ ॥
उल्कायोगं निहंत्याशु पुण्ययोगो महाबलः ॥
अश्मरीसंज्ञकं योगं यद्वच्छ्वेतार्कमूलकम् ॥ ४४ ॥
शुभयोगो निहंत्याशु विधुदोषं महाबलम् ॥
महोदरव्याधिचयं स्नुहिक्षीरं यथा तथा ॥ ४५ ॥
चंडायुधं सचंडीशं हंति सिद्धातिथिर्यथा ॥
आंत्रवृद्धिर्यथा कायं निखिलं सुदृढं यथा ॥ ४६ ॥
विजयाख्यो महायोगो लाक्षादोषं निहंति वै ॥
यथा नयनजं पुष्पं शिग्रुमूलं यथा वली ॥ ४७ ॥
ब्रह्मदंडाह्वयो योगो दोषं निर्घातसंज्ञकम् ॥
हंति यद्वन्नेत्ररोगं नलजं वीरसंयुतम् ॥ ४८ ॥
कामधेनुमहायोगो धूम्रयोगं निहंति वै ॥
उन्मादरोगं कल्याणघृतं यद्वन्महाबलम् ॥ ४९ ॥
ब्रह्मदंडाह्वयो योगो योगं क्रकचसंज्ञकम् ॥
हंति तद्वद्राजरोगं यद्वद्दंडीरसंज्ञकम् ॥ १५० ॥
प्रभंजनो महायोगो योगं संवर्त्तसंज्ञकम् ॥
शतावरीघृतं हंति मूत्रकृच्छ्रं यथा तथा ॥ ५१ ॥
इंद्रदंडो महायोगो कालदंडं महाबलम् ॥
हंति यद्वत्रिकटुकं कासश्वासं महाबलम् ॥ ५२ ॥
एकार्गलं महादोषं इंद्रदंडो निहंति वै ॥
कालकूटं विषं यद्वत्तद्वद्देवेन्दुशेखरः ॥ ५३ ॥

मंडांतदोषमखिलमभिजिद्योगसंज्ञकः ॥
हंति यद्वत्सर्वपापात्राजसूयपरो नृपः ॥ ५४ ॥
गोधूलिको महायोगो विद्धभं पापखेचरैः ॥
हंति यद्वत्पापराशिं यथा लक्ष्मीपतेः स्मृतिः ॥ ५५ ॥
अवमाख्यातिथेर्दोषं केंद्रगो देवपूजितः ॥
हंति यद्वत्पापचयं द्वित्रिषड्वार्षिकं व्रतम् ॥ ५६ ॥
ग्रहजन्माह्वयं योगं शुभः केंद्रगतो यथा ॥
हंति पापचयं भक्त्या प्रणाममिव शंकरे ॥ ५७ ॥
त्रियुस्पृग्यामदोषं यः शुभः केंद्रगतः सदा ॥
हंति यद्वत्पापचयमशून्यशयनव्रतम् ॥ ५८ ॥
प्रतिसूर्य्याह्वयं दोषं केंद्रगः शुभखेचरः ॥
निहंति यद्वन्पिशुनः सकलं स्नेहसंचयम् ॥ ५९ ॥
प्रतिचन्द्रकृतं दोषं लाभगः पूर्णचंद्रमाः ॥
हंति यद्वत्पापचयं सुलब्धाध्यापको द्विजः ॥ १६० ॥
नीहारदोषं हंत्याशु त्रिषडायगतो रविः ॥
हंति यद्वत्क्षीरचयं सद्यस्त्वम्लरसो यथा ॥ ६१ ॥
अकालगर्जितं दोषं केंद्रगः शुभखेचरः ॥
हंति यद्वत्पाशुपतमंधकं नाम राक्षसम् ६२ ॥
अकालवृष्टिजं दोषं गुरुरेको महाबली ॥
हंति यद्वद्रामशरः खरनामासुरं भृशम् ॥ ६३ ॥
दिग्धूमदोषं हंत्याशु लाभस्थानगतः शुभः ॥
हंति यद्वत्पापचयं हरेः पादोदकं महत् ॥ ६४ ॥
परिवेशकृतं दोषं षड्गः शुभखेटजः ॥
निहंति यद्वद्रतिनं चंद्रः पापांशसंस्थितः ॥ ६५ ॥
महाप्रभंजनं दोषं दशमायगतः शशी ॥

हंति यद्वत्पापचयं शिवरात्रिव्रतं महत् ॥ ६६ ॥
दग्धलग्नोद्भवं दोषं लाभगः क्षितिनंदनः ॥
हंति यद्वन्महापापं कृष्णाष्टमीव्रतं यथा ॥ ६७ ॥
शून्यधिष्ण्योद्भवं दोषं रिपुस्थानगतः कुजः ॥
हंति यद्वन्महापापं तप्तकृच्छ्रव्रतं यथा ॥ ६८ ॥
दोषं शून्यतिथेर्जातं लाभगः सौम्यखेचरः ॥
हंति यद्वन्महापापं कृच्छ्रसांतपनं यथा ॥ ६९ ॥
त्रिद्युस्पृगाख्यदोषं च हंति सिद्धातिथिः स्वयम् ॥
कालानलो यथा सर्वं निखिलं विपिनं भृशम् ॥ १७० ॥
अपवादैः समं यांति दोषाश्चैव तथा गुणाः ॥
न यांति ते महादोषाः कदाचिद्गुणकोटिभिः ॥ ७१ ॥
गुणांश्च दोषांश्च गुणापवादान्दोषापवादांश्च विचिंत्य सम्यक् ॥
गुणाधिकं दैवविदल्पदोषं कालं वदेत्तं खलु मंगलेषु ॥ १७२ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां सं० गुणदोषापवादाध्यायस्त्रिश्चत्वारिंशः ४३

## अथ वस्त्रपरिधानाध्यायः ४४ ।

सन्मानायतनं नवांबरधृतिः सत्कीर्तिसौभाग्यदा ।
शत्रूणां दमना सुहृत्प्रियकरी सद्भापणा कांतिदा ॥
विद्यानां तिलका सभासु जयदा त्रैलोक्यवश्यंकरी ।
तस्मात्तत्फलमृक्षवारवशतो वक्ष्ये शुभं चोत्तरम् ॥ १ ॥
नववस्त्रभृतः क्रमशो भवति फलं दस्रधिष्ण्यतो नियतम् ॥
संततं त्वंबरलाभं त्वतिविपुलं क्लेशमर्थहानिश्च ॥ २ ॥
क्षितिपतिपूजानियतं स्वजनविरोधः स्वमित्रतो हानिः ॥
स्थलजलकनकप्राप्तिर्विपुला कीर्तिर्विरोधमखिलनैः ॥ ३ ॥
वह्निभयं सुतहानिर्विरोधलाभः स्वबंधुजनपूजा ॥

स्थितिमखिलं लाभः पशुलाभो भूषणलाभश्च ॥ ४ ॥
धनधान्यहानिरतुला स्वजनविरोधः कलत्रकलहः स्यात् ॥
भूसुरपूजाहानिर्बहुविधरोगः समस्तगुणलाभः ॥ ५ ॥
कदन्नाशनलाभः सतत विदेशगमनं शत्रुतो भीत्याः ॥
परवनिताजनलाभः प्रभूतमणिकनकवस्तुलाभः स्यात् ॥ ६ ॥
अनलोपहतेमूंपककाष्टादिलोहप्रसंगहतेः ॥
हरिद्रारससूत्रेण नवधाभिहते शुभाशुभं चिंत्यम् ॥ ७ ॥
अंबरकोणेष्वमरा निवसंति तदंत्यमध्ययोर्मनुजाः ॥
पात्रितये दनुजाः शुभाशुभं चिंतयेन्नवांशेषु ॥ ८ ॥
धनलाभं त्वमरांशे मनुजांशे पुत्रपौत्रधनलाभः ॥
रोगभयं दनुजांशे प्रांते सर्वांशके नेष्टफलम् ॥ ९ ॥
नवांबरं संभृतमाशु जीर्णं तिग्मांशुवारांशकलग्नवर्गे ॥
निशापतेरंबुभिरार्द्रमेतत्कुजस्य वर्गे भयमेव वह्नेः ॥ १० ॥
लाभप्रदं सोमसुतस्य वर्गे वर्गे गुरोर्बुद्धिदया सुरेज्ये ॥
दुःखप्रदं सूर्यसुतस्य वर्गे तस्मिन्क्षणे वा फलमेतदेव ॥ ११ ॥
छत्रध्वजस्वस्तिकवर्द्धमानश्रीवत्समत्स्यांबुजतोरणानाम् ॥
च्छेदाकृती राक्षसभागगोपि लक्ष्मीसमृद्धिं कुरुते तदानीम् ॥ १२ ॥
कपोतकंकोष्ट्रशृगालकाकक्रव्यादगोमायुकबंधरूपाः ॥
च्छेदाकृतिर्दैवतभागगोऽपि करोति दुःखं भयमाशु नूनम् ॥ १३ ॥
इति श्रीब्रह्मर्षिवृद्धवसिष्ठवि० संहि० वस्त्रपरिधानाध्यायश्चतुश्चत्वारिंशः ॥४४॥

## अथोत्पाताध्यायः ४५।

अथातः संप्रवक्ष्यामि उत्पाताध्यायमुत्तमम् ॥
अन्यत्वं प्रकृतेः यत्तदसावुत्पातसंज्ञकम् ॥ १ ॥
अधर्मतस्त्वसत्याच्च नास्तिक्यादतिलोभतः ॥
अनाचारान्नृणां नित्यमुपसर्गः प्रजापतेः ॥ २ ॥

तद्दशास्त्रिविधोत्पाता जायंते शोकदुःखदाः ॥
दिव्यांतरिक्षक्षितिजविकारा घोररूपिणः ॥ ३ ॥
ग्रहर्क्षजा केतवश्च उत्पाता दिव्यसंज्ञकाः ॥
निर्घातपरिवेषोल्कापुरंदरधनुर्ध्वजाः ॥ ४ ॥
लोहितैरावतोग्रश्चकबंधपरिघादयः ॥
एवमाद्या महोत्पातास्त्वंतरिक्षाह्वयास्त्वमी ॥ ५ ॥
उत्पद्यते क्षितौ यच्च स्थावरं वाथ जंगमम् ॥
तदेकदेशिकं भौममुत्पातं परिकीर्तितम् ॥ ६॥
भौमास्तु तुच्छफलदास्त्वंतरिक्षास्तु मध्यमाः ॥
संपूर्णफलदा दिव्या वर्षादर्द्धात्तदर्द्धतः ॥ ७ ॥
भौमं शांत्या शमं याति मार्दवं त्वंतरिक्षजम् ॥
दिव्यं होमान्नगोभूमिदानैस्तत्कोटिहोमतः ॥ ८ ॥
महोपहाराद्रुद्रस्य गोदोहात्तत्पुरःसरम् ॥
अलंकृते क्षितितले यावत्क्षीरप्लुवं भवेत् ॥ ९ ॥
अपि दिव्यं शमं याति किं पुनस्त्वितरद्वयम् ॥
अकृत्वा शांतिकं राजा दुःखांभोधौ निमज्जति ॥ १० ॥
पुरे जनपदे कोशे वाहनेषु पुरोहिते ॥
स्त्रीपुत्रात्मनि भूपस्य पच्यते दैवमष्टभिः ॥ ११ ॥
हस्तैः षोडशभिः कार्य्यं चतुरस्रं समंततः ॥
मंडपं याज्ञिकैर्वृक्षैरथवा वनदारुभिः ॥ १२ ॥
चतुर्द्वारसमायुक्तं तोरणाद्यैरलंकृतम् ॥
हस्तैश्चतुर्भिस्तन्मध्ये कुंडं कार्यं समंततः ॥ १३ ॥
खातं हस्तचतुर्भिश्च वप्रत्रयसमन्वितम् ॥
षडंगुलोन्नतस्त्वाद्यो द्वादशांगुलविस्तृतः ॥ १४ ॥
दशांगुलोन्नतो मध्यो ह्यष्टांगुलसुविस्तृतः ॥

चतुर्दशांगुलोत्सेधश्चतुरंगुलविस्तृतः ॥ १५ ॥
तृतीयवप्रः कर्त्तव्यो योनिश्चैका तु पश्चिमे ॥
चतुर्दशांगुलैर्दीर्घा चोन्नता षोडशांगुलैः ॥ १६ ॥
हीनाधिका न कर्तव्या विस्तारः षड्भिरंगुलैः ॥
कुंडस्य लक्षणं त्वेकं कोटिहोमे तु सर्वदा ॥ १७ ॥
ईशान्यां वेदिका कार्या सार्द्धहस्तप्रमाणतः ॥
उन्नता विस्तृता कार्या प्रागुदक्प्रवणा शुभा ॥ १८ ॥
सर्वदेवमयी त्वाद्या शिवपूजापुरःसरम् ॥
ग्रहांस्तानर्चयेत्तत्र पूर्वोक्तविधिना ततः ॥ १९ ॥
पालाशसमिदाज्यान्नैर्मुखांतेऽष्टशतं पृथक् ॥
अघोरमंत्रेण ततो ग्रहहोमं च कारयेत् ॥ २० ॥
तिलहोमं व्याहृतिभिर्घृताक्तं जुहुयात्ततः ॥
द्वारे हि जापकैः स्वस्ववेदपारायणं क्रमात् ॥ २१ ॥
चमकं नमकं सूक्तपुरुषोक्तांगजापकैः ॥
होमं नवभिराचार्यैः कार्यं तद्ब्रह्मणा सह ॥ २२ ॥
शिवविष्णोः कथालापैर्दिनशेषं नयेत्ततः ॥
एवं यावत्कोटिहोमस्तावत्कार्यमतंद्रिभिः ॥ २३ ॥
नैवेद्यांते ततः पश्चाच्छांतिवाचनपूर्वकम् ॥
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः ॥ २४ ॥
तदर्द्धं वा तदर्द्धं वा लक्षहोममथापि वा ॥
कार्य्यं दोषानुसारेण वित्तशाठ्यविवर्जितः ॥ २५ ॥
होमांते दक्षिणां दद्याच्चतुर्विंशतिऋत्विजान् ॥
प्रति द्विजमलंकारं सार्द्धनिष्कशतद्वयम् ॥ २६ ॥
तदर्द्धं वा तदर्द्धं वा दोषवित्तानुसारतः ॥
एवमेव यशःकामैर्नृपैः कुर्याच्च भक्तितः ॥ २७ ॥

व्रीहिभिश्चायुरर्थी चेत्सर्वकामी तिलैश्च सः ॥
उक्ता साधारणा शांतिरुत्पातानामतः परम् ॥ २८ ॥
उत्पातश्चैव शांतिश्च वक्ष्यतेऽत्र पृथक् पृथक् ॥
मंत्रद्रव्यमनुष्ठानं भक्त्या कार्यमतंद्रितैः ॥ २९ ॥
अर्चाः प्रनृत्यन्ति पतन्ति यद्वा चलंति रोदंति हसंति यत्र ॥
पचंति जल्पंति च चेष्टयंति स्थानांतरं वाप्यथवा व्रजंति ॥ ३० ॥
वमंति धूमानलरक्ततोयं स्नेहं दधिक्षीरसुराक्षतादि ॥
अंगारकार्पासतुषास्थिरोमकबन्धपाषाणकरोदनादि ॥ ३१ ॥
एवमाद्या विकारास्ते दृश्यंते प्रतिमासु च ॥
राज्ञां जनपदानां च नाशाय प्राग्भवंति हि ॥ ३२ ॥
ऋषिब्रह्मजं पितृजं द्विजानामेव वै कृतम् ॥
शिवोत्थं लोकपालोत्थं शिशूनां नृपतेश्च तत् ॥ ३३ ॥
लोकानां विष्णुसंभूतं ग्रहोत्थं तत्पुरोधसाम् ॥
स्कन्दोत्थं मंडलीकानां विशाखोक्तं क्षमाभुजाम् ॥ ३४ ॥
गणेशोत्थं च भूपस्य व्यासोक्तं तच्च भूपतेः ॥
अन्योत्थं यद्विकारं तल्लोकाभावाय सर्वदा ॥ ३५ ॥
फलपाको भवेदष्टमासैस्तद्वत्सरेण वा ॥
उत्पातानामथैतेषां शांतिं वक्ष्ये प्रयत्नतः ॥ ३६ ॥
दृष्ट्वा देवविकारं तद्दिनत्रयमुपोषितः ॥
पुरोहितः शुद्धमनाः शुद्धभावो जितेंद्रियः ॥ ३७ ॥
चतुर्थदिवसे गत्वा दीपैः सार्द्धं शिवालयम् ॥
सहस्रकलशस्नानं कुर्यात्संकल्पपूर्वकम् ॥ ३८ ॥
तल्लिंगमंत्रैर्गन्धाद्यैर्वस्त्रैर्देवं समर्चयेत् ॥
घृतोपहारवित्तान्नैर्भक्त्या चैव समर्चयेत् ॥ ३९ ॥
ग्रहशांत्यामुक्तकुंडे स्थापयेश्च हुताशनम् ॥

पालाशसमिधाज्याग्नैस्तल्लिंगैर्वेदमंत्रकैः ॥ ४० ॥
अष्टोत्तरसहस्रं वा पृथगष्टोत्तरं शतम् ॥
तिलहोमादिकं सर्वं शेषं पूर्ववदाचरेत् ॥ ४१ ॥
रात्रौ जागरणं कुर्यान्नृत्यगीतादिभिः सह ॥
आसप्तरात्रात्कृत्यैवमथवा पंचरात्रकम् ॥ ४२ ॥
एवं यः कुरुते सम्यक् तस्माद्दोषात्प्रमुच्यते ॥
अनग्नौ दृश्यते ज्वाला काष्ठयुक्तो न दीप्यते ॥ ४३ ॥
संधुक्षितोपि नृपतेः पीडा जनपदस्य च ॥
यस्मिन्पुरे जनपदे धूमोऽनग्नौ महद्भजः ॥ ४४ ॥
दिवांधकारो वृक्षाणां राजनाशो भवेत्तदा ॥
रात्रावदर्शनं व्यभ्रे तेषामग्निश्च निष्प्रभः ॥ ४५ ॥
तदधीशस्य राष्ट्रस्य दुःखशोकभयप्रदः ॥
शयनासनवस्त्राणां पादुकेभ्यो नृगात्रतः ॥ ४६ ॥
महिषोष्ट्राश्वगोहस्तिपशुकेशेषु गात्रतः ॥
धूमाग्निविस्फुलिंगा वा दृश्यंते च जलादिषु ॥ ४७ ॥
राजराष्ट्रविनाशः स्याच्छ्रुतोऽग्नेर्भयं भवेत् ॥
आयुधानि प्रज्वलंति कोशेभ्यो निर्गतानि च ॥ ४८ ॥
वेपमानानि यदि वा जल्पन्त्यथ रुदंति वा ॥
हसंति तुमुलं युद्धमत्यंतनिकटं वदेत् ॥ ४९ ॥
उत्पातानामथोक्तानां शांतिं वक्ष्ये विधानतः ॥
रुद्राभिषेकं रुद्रेण नैवेद्यांतं प्रपूजयेत् ॥ ५० ॥
पूर्वोक्तलक्षणे कुंडे स्थापयेच्च हुताशनम् ॥
मुखांते जुहुयादग्निं मंत्रैरष्टसहस्रकम् ॥ ५१ ॥
क्षीरवृक्षसमिद्भिश्च सर्षपैश्च पृथक् पृथक् ॥
तिलहोमं व्याहृतिभिर्ब्राह्मणान्भोजयेत्ततः ॥ ५२ ॥

१ आपि त्रिरात्रम् इति क्वचित् पाठः ।

एवं यः कुरुते भक्त्या तस्माद्दोषात्प्रमुच्यते ॥
ऋत्विग्भ्यो दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः ॥ ५३ ॥
एकरात्रं त्रिरात्रं वा शेषं पूर्ववदाचरेत् ॥
अकस्मादेव वृक्षाणां शाखभङ्गो भवेद्यदि ॥ ५४ ॥
राष्ट्रभंगं वदेच्छीघ्रं हसंते देशनाशनम् ॥
रुदितो व्याधितो भीतिः कंपने ग्रामकंपनम् ॥ ५५ ॥
विस्फुलिंगेऽथवा धूमे ज्वलिते वह्नितो भयम् ॥
फलपुष्पोद्गमे काले वृक्षाणां यदि शीघ्रतः ॥ ५६ ॥
राष्ट्रविद्रावणं बालवृक्षेषु कुसुमेऽथवा ॥
शिशुहानिर्भवेत्क्षीरस्रवणे द्रव्यनाशनम् ॥ ५७ ॥
मद्ये वाहननाशः स्याच्छोणिते युद्धमादिशेत् ॥
स्नेहस्रावेऽनर्घभयं जलस्रावे महद्भयम् ॥ ५८ ॥
क्षौद्रद्रावो भवेद्यत्र रोगशोकभयं भवेत् ॥
शुष्कवृक्षे चांकुरिते वृक्षहानिस्त्वनर्घता ॥ ५९ ॥
अकस्माच्छोपिते वृक्षे तदेव फलमिष्यते ॥
पतिते स्वयमस्थाने भयं दैवकृतं भवेत् ॥ ६० ॥
जल्पने चलने वृक्षे राजराष्ट्रविनाशनम् ॥
कृत्वाभिषेकं वृक्षस्य यावच्छक्यं प्रयत्नतः ॥ ६१ ॥
अर्चयेद्गंधपुष्पस्रग्वस्त्रच्छत्रोपहारकैः ॥
तत्पश्चादष्टभिर्हस्तैश्चतुर्भिर्वाथ मण्डपम् ॥ ६२ ॥
कृत्वाथ कुंडं तन्मध्ये संम्यक्तत्पूर्ववत्ततः ॥
द्वादशकृत्वो नमकं चमकं च भवेदितः ॥ ६३ ॥
अग्निसंस्थापनं कृत्वा मुखांते जुहुयाच्चरुम् ॥
रुद्राय स्वाहेत्यनेन मंत्रेण च सकृद्धुतम् ॥ ६४ ॥
पृथगष्टशतं भक्त्या तिलव्याहृतिभिस्ततः ॥

ऋत्विग्भ्यो दक्षिणां दद्याच्छेषं पूर्ववदाचरेत् ॥ ६५ ॥
विप्रान्संतोषयेद्भक्त्या घृतपायसभोजनैः ॥
उत्पातानां वृक्षजानां शांतिमेषां प्रकल्पयेत् ॥ ६६ ॥
एवं यः कुरुते शांतिं तस्माद्दोषात्प्रमुच्यते ॥
नालेऽस्मिन्सर्वसस्यानामेकस्मिन्द्विस्त्रिसंभवे ॥ ६७ ॥
मरण तत्तदीशानां युग्मे पुष्पफले सति ॥
वृक्षस्य सुलतादीनामतिवृद्धिफलानि च ॥ ६८ ॥
शत्रोरागमनं भाव्यमचिरान्नियमेन वा ॥
उक्ततैलाधिकं हीनं तिलेभ्यो वा भवेद्यदा ॥ ६९ ॥
तैलं तदान्नतो भीतिरेरंडाद्यमथापि वा ॥
विकारैः फलपुष्पाद्यैः सौम्येन वरुणादिभिः ॥ ७० ॥
जुहुयात्सौम्यमंत्रेण पशुनिर्वापणाच्छुचिः ॥
सस्ये विकारे तत्क्षेत्रं दत्त्वा विप्राय तत्र वै ॥ ७१ ॥
मंत्रेण च चरुं हुत्वा तस्माद्दोपात्प्रमुच्यते ॥
अतिवृष्ट्यवनावृष्टौ क्षुद्भयः शत्रुतो भयम् ॥ ७२ ॥
अनृतौ चेद्रोगभयमनृते भूभुजां वधः ॥
संप्रवृत्तेषु ऋतुषु शीतोष्णं तद्विपर्ययात् ॥ ७३ ॥
षण्मासाद्राष्ट्रभीतिः स्यादथवा रोगदुःखतः ॥
अकाले सततं वृष्टिः सप्ताहं नृपतेर्वधः ॥ ७४ ॥
रक्तवृष्टौ रणोद्योगो मांसवृष्टौ महद्भयम् ॥
मरणं स्यादस्थिवृष्टौ वसावृष्टौ हि तत्फलम् ॥ ७५ ॥
क्षौद्रवर्षे राष्ट्रनाशस्त्वंगारैः पशुभिः सदा ॥
धान्याकफलपुष्पाद्यैर्लोहैः स्तेयमहद्भयम् ॥ ७६ ॥
पर्णैस्तृणैः काष्ठवर्षैस्तदेव फलमादिशेत् ॥
पाषाणवृष्टिरभ्रेषु प्राणिवृष्टिरथापि वा ॥ ७७ ॥

चित्रवृष्टिर्यदि भवेत्सस्यानामीतिकारणम् ॥
आकाशे निर्मले भानोर्यदा छाया न दृश्यते ॥ ७८ ॥
दृश्यते वा प्रतीपा सा तदा क्षुद्भयमादिशेत् ॥
रवीन्दुवायुपर्जन्ययोगः कार्यस्त्ववग्रहे ॥ ७९ ॥
पूर्ववत्स्वर्णगोदाने रत्नैर्दोषात्प्रमुच्यते ॥
समीपस्था नदी यत्र नगराद्दूरगा यदि ॥ ८० ॥
तत्पुरं कुरुते शून्यं यदि नासौ प्रतीपगा ॥
रक्तमांसकृमिस्नेहवाहनी शत्रुतो भयम् ॥ ८१ ॥
अशोषिते प्रवाहादौ शोषितेऽपि च तत्फलम् ॥
गीतं प्रजल्पनं ज्वाला धूमः क्राथोऽप्यरोदनम् ॥ ८२ ॥
एवमादीनि कूपेषु जनानां निधनाय वै ॥
अखाते सलिले जाते खातेऽम्बुन्यगुणे यदि ॥ ८३ ॥
तोयाशये वापि कृतौ शाखिनः शत्रुतो भयम् ॥
विकारे च तथा कुर्य्यात्तन्मंत्रैर्वरुणस्य च ॥ ८४ ॥
पूजाहोमं यथा पूर्वमरिष्टं याति तच्छमम् ॥
हीनकालेऽधिके तस्य देशस्य च कुलस्य च ॥ ८५ ॥
हीनकालेऽधिके काले प्रसवे सति योषिताम् ॥
असंख्यदिवसे युग्मप्रसवे चापि नाशनः ॥ ८६ ॥
अमानुषाणि बीजानि जायते चांडजानि च ॥
हीनांगस्त्वाधिकांगश्च अनंगाः संभवन्ति हि ॥ ८७ ॥
विशिरो द्वित्रिशिरसो विमुखाः पक्षिसन्निभाः ॥
विनाशं तस्य देशस्य राष्ट्रस्य च विनिर्दिशेत् ॥ ८८ ॥
हस्तिनी वडवा गावो युग्मं यत्र प्रसूयते ॥
विजात्यं वा विकारं वा मासैः षड्भिर्नृपक्षयम् ॥ ८९ ॥
उष्ट्रमाहिष्यो वेत्यादिप्रसवे कलहागमः ॥

उक्तानां च विकाराणां शांतिं वक्ष्ये प्रयत्नतः ॥ ९० ॥
त्यक्त्वा परदेशेषु नार्यस्ताः सहितार्थिना ॥
द्विजान्संतर्पयेदन्नैर्ग्रहशांतिं च कारयेत् ॥ ९१ ॥
चतुष्पादाश्च यूथेभ्यस्त्यक्त्वा परभूमिषु ॥
नगरं स्वामिनं यूथमन्यथा तु विनाशयेत् ॥ ९२ ॥
गोगजाश्वोष्ट्रमहिषनरपश्वादयो यथा ॥
रमंते चेद्द्वियोनौ तु पक्षिणोवान्यजन्तुषु ॥ ९३ ॥
धेनुर्धेनुं पिबेद्यद्वा अनड्वाननड्वहं प्रति ॥
श्वानो वापि पिबेद्धेनुं धेनुः श्वानमथापि वा ॥ ९४ ॥
एवमादिविकारा ये प्राणिनां प्रभवंति चेत् ॥
मासत्रयांतरे नूनं परचक्रागमं वदेत् ॥ ९५ ॥
त्यक्त्वा दिवाशनं होमं पूर्ववत्कारयेज्जपम् ॥
प्राजापत्येन मंत्रेण समिदाज्यचरुं क्रमात् ॥ ९६ ॥
हुत्वा च तर्प्पयेद्विप्रान्बहुस्वर्णसुभोजनैः ॥
एवं यः कुरुते सम्यक् तस्माद्दोषात्प्रमुच्यते । ९७ ॥
अकृत्वा नास्तिको लोभादश्नुते सर्वसंकटात् ॥
आरोहकं विना यत्र वाहनं यदि गच्छति ॥ ९८ ॥
आरोहके विद्यमाने न व्रजेद्वाहनं यदा ॥
अकस्माद्रथचक्राणि पादभंगो भवेद्यदि ॥ ९९ ॥
परचक्रागमं तत्र वदेत्वत्सरतो भृशम् ॥
अताडिते तूर्य्यनादस्ताडिते नादवर्जिते ॥ १०० ॥
अथ नानाविधा नादा राजराष्ट्रविनाशनम् ॥
तूर्यादिनादा नभसि श्रूयंते वापि निःस्वनाः ॥ १ ॥
परैरभिभवस्तत्राप्यथवा महती गदा ॥
स्वलांगूलेन स्वतनुं धेनुर्यदि सुवेष्टिता ॥ २ ॥

नादाकारं शूर्पनिभं दर्वीरूपमथापि वा ॥
मुसलोलूखलं रूपं विकारं वा भवेद्यदि ॥ ३ ॥
शृगालसदृशे नादे विकारे वाथ जल्पिते ॥
हसिते रोदने वापि भयं भवति शीघ्रतः ॥ ४ ॥
अथवा राजनाशः स्यादचिकित्सो गदो भवेत् ॥
उत्पातेष्वेषु वायव्येपूत्तमं सक्तुभिर्यजेत् ॥ ५ ॥
वायुं पूज्य शमीष्वत्र होमं कुर्य्याच्च पूर्ववत् ॥
आरायो भूप इत्याद्या ऋग्भिः पंचभिरेव च ॥ ६ ॥
बह्वन्नस्वर्णदानैश्च तद्दोपं शांतिमाप्नुयात् ॥
अकस्माद्विपिने यत्र चरंति ग्रामपक्षिणः ॥ ७ ॥
ग्रामेषु यदि वा वन्या निर्भयाद्वा विशंति हि ॥
रात्रौ भवंति काकाश्च दिवसे कौशिकादयः ॥ ८ ॥
शृगालो विशति ग्रामं शशो वाप्यथवा निशि ॥
मृगाः पक्षिगणा वापि चुक्रोशंति च संध्ययोः ॥ ९ ॥
ग्रामस्य निकटे नूनं दीप्तायां शत्रुतो भयम् ॥
कपोतो विशति ग्राममारोहेद्वा विशेद्गृहम् ॥ ११० ॥
श्येनगृध्रादयो व्योम्नि भ्रमंतो वा प्रदक्षिणम् ॥
गृहस्य प्रांगणे यस्य हेमचक्षुः स्वरो भवेत् ॥
एवमादिविकारास्ते पक्षिणां चेद्भवंति हिः ॥ ११ ॥
मधुवल्मीकजच्छत्रपत्रांकुरविरूपकाः ॥
गृहेषु यदि जायंते कर्तृनाशो गृहस्य च ॥ १२ ॥
शवाद्गांगं गृहीत्वा श्वा यदि वा मंदिरं नयेत् ॥
तत्स्वामिनाशनं क्षिप्रं गवांगं चेद्रणे मृतिः ॥ १३ ॥
मृगपक्षिविकारेषु कुर्य्याद्धोमं जपादिकम् ॥
देवाः कपोत इत्यादि जप्तव्याः पंचभिर्द्विजैः ॥ १४ ॥

सुदेव इति मंत्रं च जपेच्छाकुनिकं च यत् ॥
अथर्वणशिरा यस्य जप्तव्याः पापनुत्तये ॥ १५ ॥
गोभूस्वर्णान्नदानेन सर्वपापं विनश्यति ॥
तस्मादतिप्रयत्नेन शांतिकर्म समाचरेत् ॥ १६ ॥
इंद्रद्वारार्गलास्त्विंद्रध्वजो वा नगरं यदि ॥
दृश्यते त्विंद्रदंडो वा तदा नृपवधं वदेत् ॥ १७ ॥
गृहस्तंभद्वारदारुकपाटपतनं यदि ॥
आस्फोटनं चैव तेषां तदा गृहपतेर्वधः ॥ १८ ॥
संध्याद्वयेऽनले दीप्ते धूमो वा यदि कानने ॥
अच्छिद्रे वा भुवि च्छिद्रं भूकंपो वा भयप्रदः ॥ १९ ॥
वेदाचारं परित्यज्य वेदबाह्यं समाचरेत् ॥
असाधुशीलो नृपतिः सराष्ट्रेण विनश्यति ॥ १२० ॥
शिशवश्चोद्धता यत्र नगरे कृत्रिमायुधाः ॥
छिंधिभिंधीत्युक्तवन्तस्तदा चेद्युद्धमादिशेत् ॥ २१ ॥
भूतप्रेतपिशाचेषु दृष्टेषु सदनेषु च ॥
तेषां हानिभयं कार्या शांतिर्दोषापनुत्तये ॥ २२ ॥
शचीं शचीपतिं पूज्य तन्मंत्रैर्जुहुयाद्धविः ॥
भूमिस्वर्णान्नदानैश्च बलिभिः शांतिमाचरेत् ॥ २३ ॥
राजराष्ट्रविनाशाय केतूनामुदयः सदा ॥
वज्राशनिमहीकंपसंध्यानिर्घातनिस्वनाः ॥ २४ ॥
परिवेषरजोधूमरक्तार्कास्तमयोदयाः ॥
द्रुमेभ्योऽन्नरसस्नेहमधुपुष्परसोद्गमाः ॥ २५ ॥
पक्षावर्कविकारा यो शिवायमधुमाधवे ॥
ताळोल्कापातकलुषं कपिलार्केन्दुमंडलम् ॥ २६ ॥
अनाग्निज्वलनास्फोटसमरेष्वानिलाहतम् ॥

रक्तपद्मारुणा संध्या नभः क्षुब्धार्णवोपमम् ॥ २७ ॥
सरितां चांबुसंशोषं दृष्ट्वा ग्रामे शुभं वदेत् ॥
शक्रायुधं परिवेषं विद्युच्छुष्कविरोहणम् ॥ २८ ॥
कूपोद्वर्त्तनवैकृत्यं रसनं दारणं क्षितेः ॥
नदोदपानसरसां विद्युच्चोत्तरणं प्लुवः ॥ २९ ॥
शरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥
दिव्यस्त्रीभूतगंधर्वविमानाद्भुतदर्शनम् ॥ १३० ॥
ग्रहनक्षत्रताराणां दर्शनं तु दिवांबरे ॥
गीतवादित्रनिर्घोषवनोपवनसानुषु ॥ ३१ ॥
सस्यवृद्धिरपांहानिरपायाः शरदि स्मृताः ॥
शीतानिलतुषारत्वनर्त्तनं मृगपक्षिणाम् ॥ ३२ ॥
रक्षोयक्षादिसत्वानां दर्शनं वागमानुषी ॥
दिशो धूमांधकारश्च सनभो वनपर्वताः ॥ ३३ ॥
उच्चैः सूर्योदयास्तौ च हेमंते शोभनाः स्मृताः ॥
हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ॥ ३४ ॥
कृष्णांजनसमाकाशं तारोल्कापातपिंजरम् ॥
चित्रगर्भोद्भवः स्त्रीषु गजाश्वमृगपक्षिषु ॥ ३५ ॥
पत्रांकुरलतानां च विकाराः शिशिरे शुभाः ॥
उत्पातानखिलानुक्त्वा काकसंगमधुच्यते ॥ ३६ ॥
काकयोर्मैथुनं सर्वे दिवा वा निशि वा नरः ॥
स वै निधनमाप्नोति स्थाननाशमथापि वा ॥ ३७ ॥
महारोगाभितप्तो वा शत्रुभिर्वा पराजितः ॥
तद्दोपशमनार्थाय शांतिं यत्नात्समाचरेत् ॥ ३८ ॥
कुंडं पूर्वोक्तविधिना कृत्वा होमं च कारयेत् ॥
यत इंद्रं त्रिभिर्मंत्रैः सम्यक्त्र्यंबकेन वा ॥ ३९ ॥

पालाशसमिदाज्यान्नैः पृथगष्टोत्तरं शतम् ॥
एवं यः कुरुते सम्यक्तस्माद्दोषात्प्रमुच्यते ॥ १४० ॥
शिथिलीजायते यस्य तस्य हानिर्निवेशने ॥
दुःखशोकभयक्लेशं कुटुंबकलहो भवेत् ॥ ४१ ॥
वह्निभीतिः शत्रुभीतिराधिव्याधिस्ततो भयम् ॥
तद्दोषशमनार्थाय शांतिं वक्ष्ये यथाविधि ॥ ४२ ॥
सुवर्णेन प्रमाणेन तदर्द्धार्द्धेन वा पुनः ॥
प्रतिमां मृत्युरूपाणां कल्पयित्वा प्रयत्नतः ॥ ४३ ॥
अपमृत्युमपघ्नुधामिति मंत्रद्वयेन च ॥
कृत्वोपचारान्निखिलान्स्नाप्य पंचामृतैः सह ॥ ४४ ॥
रक्तप्रावरणं वेश्म नैवेद्यांतं समर्पयेत् ॥
तदीशान्यां पूर्णकुंभं पंचत्वक्पल्लवैर्युतम् ॥ ४५ ॥
आब्लिंगैर्वारिमंत्रैश्च मंत्रितं वस्त्रवेष्टितम् ॥
स्वर्णरत्नैश्च संयुक्तं स्थापयित्वार्चयेत्ततः ॥ ४६ ॥
होमं च कारयेत्प्राच्यां कुंडे वा स्थंडिलेऽपि वा ॥
पालाशसमिदाज्यान्नैरुक्तमंत्रद्वयेन च ॥ ४७ ॥
भक्त्याष्टशतं जुहुयादष्टाविंशतिमेव वा ॥
तिलहोमं व्याहृतिभिस्ततः पूर्णाहुतिं जपेत् ॥ ४८ ॥
मृत्युवारुणसूक्तैश्च ग्रह मंत्रैस्त्रिपंचकैः ॥
कुंभोदकेन वा स्नानमाचार्यः प्रार्थयेत्ततः ॥ ४९ ॥
आचार्यायैव तां दद्यात्प्रतिमां निष्कविंशतिः ॥
तदर्द्धेन तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥ १५० ॥
ब्राह्मणेभ्यो विशिष्टेभ्यो दद्याद्वित्तानुसारतः ॥
ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपूर्वकम् ॥ ५१ ॥

---

१ रुद्रसूक्तैः इति क्वचित् पाठः ।

एवं यः कुरुते सम्यक्तस्माद्दोषात्प्रमुच्यते ॥
उक्ता साधारणी शांतिर्द्रव्यमंत्रफलैः सह ॥ ५२ ॥
ब्रह्मादिदिक्षु प्रत्येकं द्रव्यमंत्रफलैः क्रमात् ॥
शिथिलीजायते मध्ये सप्ताहाच्च भवेच्छुभम् ॥ ५३ ॥
अत ऊर्ध्वं व्याधिभयं ब्रह्मा तत्राधिदेवता ॥
तन्मंत्रेणैव जुहुयात्पलाशान्नेन सर्पिषा॥ ५४ ॥
शिथिलीजायते प्राच्यां भयं स्यादष्टवासरात् ॥
अत ऊर्ध्वं राजभयमिन्द्रस्तत्राधिदेवता ॥ ५५ ॥
जुहुयात्खादिराज्यान्नं तन्मंत्रेण च भक्तितः ॥
अग्निभागे यदि भवेत्पंचाहात्सुहृदागमः ॥ ५६ ॥
अत ऊर्ध्वं सर्पभयमग्निस्तत्राधिदेवता ॥
औदुंबराज्यचरुभिर्जुहुयादग्निमंत्रतः ॥ ५७ ॥
शिथिलीजायते याम्यामिष्टसिद्धिस्त्रिवासरात् ॥
भार्यानाशस्ततश्चोर्द्ध्वं यमस्तत्राधिदेवता ॥ ५८ ॥
घृतान्नप्लक्षसमिधयाम्यमंत्रेण भक्तितः ॥
नैर्ऋत्यां वा यदि भवेद्धान्यलाभोऽष्टवासरात् ॥ ५९ ॥
अत ऊर्ध्वं चोरभयं जलेशस्तत्र देवता ॥
वटाज्यान्नेन जुहुयादृचा वरुणसंज्ञया ॥ १६० ॥
शिथिलीजायते वायौ पशुनाशस्त्रिवासरात् ॥
अत ऊर्ध्वं शत्रुभयं वायुस्तत्राधिदेवता ॥ ६१ ॥
अपामार्गाज्यचरुभिः स्वयं वा जुहुयात्ततः ॥
शिथिलीजायते सौम्ये स्वर्णलाभोऽष्टवासरात् ॥ ६२ ॥
कुटुंबकलहः पश्चात्कुबेरस्तत्र देवता ॥
अश्वत्थसमिदाज्यान्नैः सौम्यमंत्रेण भक्तितः ॥ ६३ ॥
शिथिलीजायते रौद्रे स्वर्णलाभोऽष्टवासरात् ॥

अत ऊर्ध्वं तु निधनं रुद्रस्तत्राधिदेवता ॥ ६४ ॥
आज्यान्नार्कसमिद्भिश्च जुहुयात्तु तया ऋचा ॥
देवहोमस्नानकूपभुजिस्थाने च तन्मृतिः ॥ ६५ ॥
अन्नभांडे चान्नहानिः स्नेहभांडे प्रजाक्षयः ॥
सर्वे च जलभांडे च पत्नीनाशस्तथा भवेत् ॥ ६६ ॥
शयने कर्तृनिधनं कुंडोपरि धनक्षयः ॥
आलवाले पट्टस्थाने नृपाद्भवति वै भयम् ॥ ६७ ॥
उलूखलेकूशूले च द्वारदेशे महारुजा ॥
प्राकारे प्रांगणेऽलिंदे क्रीडास्थाने तनुक्षयः ॥ ६८ ॥
गवां स्थानेषु गोहानिः पशुस्थाने पशुक्षयः ॥
दधिभांडेषु तन्नाशः क्षीरभांडे शिशुक्षयः ॥ ६९ ॥
आज्यभांडेऽन्नभीतिः स्यान्मधुभांडे तपःक्षयः ॥
सौवीरपक्कभांडे च लवणे कलहागमः ॥ १७० ॥
पेटिकायां वस्त्रहानिस्तरुपीठे रिपोर्भयम् ॥
गृहोपकरणे स्थाने क्षिप्रं तस्करतो भयम् ॥ ७१ ॥
शाकिन्यारामखलपूसस्यक्षेत्रे फलक्षयः ॥
पुरीषमंदिरे गोष्ठे वृषचिकित्सारुजां भवेत् ॥ ७२ ॥
तुल्यस्थानानि सर्वेषामुक्तराशां च कथ्यते ॥
शिथिलीजायते यत्र ग्रामे जनपदे पुरे ॥ ७३ ॥
चैत्ये देवालये सेतौ विपिने पर्वतेषु च ॥
नदीतीरे जले चाथ क्षुद्रदेवगृहेषु च ॥ ७४ ॥
अश्वालये गजगृहे खरोष्ट्रमृगपक्षिणाम् ॥
विद्यालये शस्त्रगृहे राज्योपकरणालये ॥ ७५ ॥
दासीदासगृहाद्येषु तत्तद्वर्गविनाशनम् ॥
साधारणेन शांत्यैव एते दोषा लयं ययुः ॥
तस्माच्छांतिश्च कर्तव्या द्विजभोजनपूर्वकम् ॥ ७६ ॥

अथ पल्लीपतन फलं वक्ष्ये ।

कुड्यांगे मस्तकाद्यंगे पतिते फलमुच्यते ॥
मस्तके राज्यनाशः स्याद्भाले कर्णे च भूषणम् ॥ ७७ ॥
वक्षःस्थले तु सौभाग्यं हृदि प्रीतिविवर्द्धनम् ॥
पुत्रलाभस्तु कुक्षौ स्यान्नाभौ कीर्तिविवर्द्धनम् ॥ ७८ ॥
नेत्रयोर्मित्रलाभः स्यात्सुगंधं नासिकोपरि ॥
वक्रे तु भोजनं कंठे स्त्रीलाभः स्कंधयोर्जयः ॥ ७९ ॥
हस्ते तेजोविवृद्धिः स्यादर्थवृद्धिः करद्वयोः ॥
अर्थलाभस्तु पृष्ठे स्यात्पार्श्वयोः सुहृदागमः ॥१८०॥
कटिस्थाने वस्त्रलाभो गुह्यस्थाने समागमः ॥
गुदे रोगविनाशः स्यादुरुजान्वोश्च वाहनम् ॥ ८१ ॥
जंघयोः पादयोश्चैव सदा गमनमादिशेत् ॥
पादयोश्चोर्द्धगमनं कुर्यादामस्तकाद्यदि ॥ ८२ ॥
गात्रप्रक्षिणं वापि राज्यलाभो भवेत्तदा ॥
मस्तकात्पादपर्यंतं यदि गच्छेत्तु कुड्यतः ॥ ८३ ॥
गात्रप्रदक्षिणं वापि हानिशोकं समादिशेत् ॥
सरटीपतने हानिः सर्वांगेषु च सर्वदा ॥ ८४ ॥
ऊर्द्ध्वं गच्छेत्तथा वापि कुटुम्बकलहागमः ॥
सरटीपतनादेव सचेलः स्नानमाचरेत् ॥ ८५ ॥
व्याधिर्लक्ष्मीवह्निभयं बन्धुनाशधनक्षयः ॥
महद्यशः सुहृल्लाभः पुत्रहानिः क्षमाक्षयः ॥ ८६ ॥
मस्तके चेंद्रलुप्ते तु ब्रह्मस्थानादि तत्फलम् ॥
मस्तके त्वग्निदाहः स्यान्मिलप्रस्रवदूषिते ॥ ८७ ॥
काकश्येनादिनिहते शुष्कनिष्ठीवदूषिते ॥
विनापि वपनं सम्यक् केशानां शुद्धिरिष्यते ॥ ८८ ॥

सपंचगव्यतैलेनाभ्यंगस्नानं समाचरेत् ॥
पश्चात्तुजलसंपूर्ण नवकुंभं प्रकल्पयेत् ॥ ८९ ॥
पंचत्वक्पल्लवोपेतं पंचामृतसमन्वितम् ॥
अष्टमृत्तिकसद्बीजस्वर्णरत्नसमन्वितम् ॥ ९० ॥
शतौषधिसमायुक्तं शुक्लवस्त्रसमन्वितम् ॥
अग्निर्गोवारुणैः सूक्तैर्मंत्रितं समलंकृतम् ॥ ९१ ॥
धान्योपरि सुसंस्थाप्य चोपचारैः समर्चयेत् ॥
स्नात्वा तत्कुंभतोयेन तिलहोमं समाचरेत् ॥ ९२ ॥
ब्राह्मणाय ततो दद्यात्कुंभं वस्त्रं सदक्षिणम् ॥
ब्राह्मणान्भोजयेत्पश्चात्तस्माद्दोषात्प्रमुच्यते ॥ ९३ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठवि० संहितायामुत्पाताध्यायःपञ्चचत्वारिंशः ॥४५॥

---

## अथ रोगोत्पत्तिशान्त्यध्यायः ४६ ।

रोगशांतिं प्रवक्ष्यामि रोगार्त्तानां शरीरिणाम् ॥
बलिपूजांगहोमैश्च जपब्राह्मणभोजनैः ॥ १ ॥
यस्मिन्धिष्ण्ये यदा नृणां रोगः संजायते सदा ॥
धिष्ण्यपूजा प्रकर्तव्या तदीश्वरसुतुष्टये ॥ २ ॥
सुवर्णेन प्रमाणेन तदर्द्धेन च वा पुनः ॥
धिष्ण्येशप्रतिमां कल्प्य यथा वित्तानुसारतः ॥ ३ ॥
ईशान्यामथवा प्राच्यामुदीच्यां दिशि संलिखेत् ॥
तंडुलोपर्य्यष्टदलं पद्मं गोमयमंडले ॥ ४ ॥
पंचामृतैः सलेहैश्च तत्तन्मंत्रैः पृथक् पृथक् ॥
स्नाप्य कल्पोक्तमंत्रेण प्रतिमां स्थापयेत्ततः ॥ ५ ॥
कर्णिकायां सुसंस्थाप्य धृत्वा देवं समर्चयेत् ॥
तद्वर्णवस्त्रगंधाद्यैरुक्तधूपोपहारकैः ॥ ६ ॥

आरक्तवर्णं कुभं च पंचत्वक्पल्लवैर्युतम् ॥
शुक्लवस्त्रस्वर्णरत्नशतौषधिसमन्वितम् ॥ ७ ॥
मृत्पंचगव्यसद्बीजफलक्षौद्रकुशान्वितम् ॥
देवस्य पूर्वतः स्थाप्य जलमंत्रैः समर्चयेत् ॥ ८ ॥
तत्प्राच्यां स्थंडिले वह्निं विधिवत्स्थापयेत्ततः ॥
मुखांते जुहुयादुक्तद्रव्येणाष्टसहस्रकम् ॥ ९ ॥
तिलाहोमव्याहृतिभिरष्टोत्तरसहस्रकम् ॥
पूर्णाहुतिं च जुहुयात्सम्यक् स्नायीत पूर्ववत् ॥ १० ॥
ततः शुद्धोपविष्टस्य रोगिणः प्राङ्मुखस्य च ॥
मंत्रपूतैः कुंभजलैरांग्लैर्वारिमंत्रकैः ॥ ११ ॥
मार्जनं कारयेत्तस्य सम्यक् संकल्पपूर्वकम् ॥
नीराजनं च शुद्धात्मा पूजास्थाने समागतः ॥ १२ ॥
देवं हुताशनं भक्त्या प्रणम्य प्रार्थयेदिति ॥
अमृतोद्भवधिष्ण्येश यतस्त्वं शंकरात्मकः ॥ १३ ॥
रोगादस्माच्च मां रक्ष तव वश्याश्च धिष्ण्यपाः ॥
इति प्रार्थ्य ततो दद्यात्प्रतिमां वस्त्रसंयुताम् ॥ १४ ॥
दक्षिणासहितां भक्त्या आचार्याय कुटुंबिने ॥
ब्राह्मणे च यथा भक्त्या ब्राह्मणान्भोजयेत्ततः ॥ १५ ॥
कृत्वा नक्षत्रपूजां च तिथिवासरयोरपि ॥
सर्वान्कामानवाप्नोति रोगी रोगात्प्रमुच्यते ॥ १६ ॥
अश्विन्यामुत्थितो व्याधिर्नवरात्रेण मुच्यते ॥
देवस्यत्वेति मंत्रेण गायत्री कश्यपोऽश्विनौ ॥ १७ ॥
श्वेतवर्णौ सुधापूर्णौ कुंभांभोजधरौ पृथक् ॥
चंदनोत्पलपुष्पाज्यगुग्गुलू च गुडप्रियौ ॥ १८ ॥
क्षीरलड्डूकभोक्तारौ समिधः क्षीरवृक्षजाः ॥

गुडोदनबलिं दद्याद्दीपैः सार्द्धं निशामुखे ॥ १९ ॥
भरण्यामुत्थितो व्याधि रचिरान्निधनप्रदः ॥
मासेन मुंचत्यथवा दैवस्य कुटिला गतिः ॥ २० ॥
त्र्यंबकस्य तु मंत्रस्य चोक्ता छंदर्षिदेवता ॥
गंधोऽगुरुः करवीरं पुष्पं धूपश्च गुग्गुलुः ॥ २१ ॥
आज्यदीपं च सर्वेषां नैवेद्यं च गुडोदनम् ॥
पाशदंडधरी रक्तस्त्वाज्यमध्वाक्षतैर्हविः ॥ २२ ॥
महिषीनायकारूढः कृशरान्नबलिं हरेत् ॥
वक्ष्यमाणेन मंत्रेण बलिं सम्यक् प्रदापयेत् ॥ २३ ॥
कृत्तिकासूत्थितो व्याधिर्दशरात्रेण मुंचति ॥
स्रुक्स्रुवाभयवरदः स्ववर्णो मेषवाहनः ॥ २४ ॥
मेधातिथिर्जगत्यग्निः पुनंतु मामितस्य च ॥
चंदनं यूथिकापुष्पं घृतदीपः सगुग्गुलुः ॥ २५ ॥
नैवेद्यं तिलमाषान्नं चणकाद्येन संयुतम् ॥
गुडोदनं हविस्तत्र पायसेन बलिं हरेत् ॥ २६ ॥
रोहिण्यामुत्थितो व्याधिर्दशरात्रेण मुंचति ॥
नमो ब्रह्मण्यमंत्रस्य गायत्री विधिरीश्वरः ॥ २७ ॥
शुष्कः कमंडलुधरस्त्वक्षसूत्राभयप्रदः ॥
चंदनं कमलं पुष्पं सदशांगं च गुग्गुलुम् ॥ २८ ॥
नैवेद्यं पायसं साज्यं सर्वदानैर्हविर्भवेत् ॥
दधिक्षीरघृतक्षौद्रशाल्यन्नेन बलिं हरेत् ॥ २९ ॥
चंद्रभे चोत्थितो व्याधिः पंचरात्रेण मुंचति ॥
गदावरदपाणिश्च श्वेतोऽसौ रथवाहनः ॥ ३० ॥
नवोनवोभवत्यस्य गायत्री गौतमः शशी ॥
चंदनं कुमुदं पुष्पं दशांगं पायसोदनम् ॥ ३१ ॥

नैवेद्यं मंडकापूपं घृतक्षौद्रसमन्वितम् ॥
शर्करादधिमिश्रेण शुक्लान्नेन बलिं हरेत् ॥ ३२ ॥
आर्द्रायामुत्थितो व्याधिरचिरान्निधनप्रदः ॥
मासेन मुच्यत्यथवा दैवस्य कुटिला गतिः ॥ ३३ ॥
शुद्धस्फटिकसंकाशः शूलखड्गाभयप्रदः ॥
नमः शंकरायेत्यस्य बृहतीशो विधी ऋषिः ॥ ३४ ॥
चंदनं सौरभं पुष्पं दशांगं पायसोदनम् ॥
समध्वाज्यं हविस्तत्र दध्योदनबलिं हरेत् ॥ ३५ ॥
पुनर्वसुभवो व्याधिर्नवरात्रेण मुंचति ॥
कमंडलवक्षसूत्रेध्मदर्भस्रुक्स्रुचभृत्सदा ॥ ३६ ॥
अदितिर्द्यौश्च मंत्रस्य त्रिष्टुपो द्रुहिणोऽदितिः ॥
हरिद्राकुंकुमं गंधं पुष्पसेवंतिकादयः ॥ ३७ ॥
धूपो मलयजं पिष्टं घृतान्नं पीतवर्णकम् ॥
घृताक्तं तंडुलं हविः पीतान्नेन बलिं हरेत् ॥ ३८ ॥
पुष्ये समुत्थितो व्याधिः सप्तरात्रेण मुंचति ॥
पीतो दंडकमंडलवक्षसूत्राभयोद्यतः ॥ ३९ ॥
बृहस्पते अतीत्यस्य त्रिष्टुपो वांगिराऋषिः ॥
कुंकुमं वारिजं पुष्पं नैवेद्यं घृतपायसम् ॥ ४० ॥
मंडकागुडसंयुक्तमेतच्चैव हविर्भवेत् ॥
समंडकघृतान्नेन बलिं तत्र प्रदापयेत् ॥ ४१ ॥
आश्लेषामुत्थितो व्याधिः क्लेशान्मासेन मुंचति ॥
नमो अस्त्वितिमंत्रस्य विरजाग्निश्च सर्पराट् ॥ ४२ ॥
मधुपर्णो भोगयुक्तः खड्गचर्मधरः शुभः ॥
सकुंकुमागुरुगन्धं पुष्पं चागस्तिसंभवम् ॥ ४३ ॥
घृतगुग्गुलधूपोऽत्र नैवेद्यं क्षीरसर्पिषः ॥

हविः साज्यं मुदध्यान्नं दध्योदनबलिं हरेत् ॥ ४४ ॥
पितृभे चोत्थितो व्याधिः स चिरान्निधनप्रदः ॥
अथवा सार्द्धमासेन धूम्रो दंडपवित्रधृक् ॥ ४५ ॥
आयंतुनस्त्विवतीवास्य जगती पितरोऽब्जजः ॥
चंदनं चंपकं पुष्पं धूपः सघृतगुग्गुलुः ॥ ४६ ॥
नैवेद्यं घृतपिष्टान्नं तिलान्नं सघृतं हविः ॥
सतिलान्नं च मुद्गान्नं बलिं च पितृतुष्टये ॥ ४७ ॥
पूर्वाफाल्गुनिभे व्याधिरर्द्धमासेन मुंचति ॥
भग एव भगवानित्यस्य जगती त्रिष्टप्च गोविधिः ॥ ४८ ॥
पद्माभयकरः पद्मवर्णः सिंहासने स्थितः ॥
चंदनं मालतीपुष्पं बिल्वधूपो घृतोदनम् ॥ ४९ ॥
नैवेद्यं शर्करापूपलड्डूकाभिश्च संयुतम् ॥
घृतोदनं हविस्तत्र पायसेन बलिं हरेत् ॥ ५० ॥
अर्यमर्क्षे भवेद्व्याधिरर्द्धमासेन मुंचति ॥
पद्मवर्णः पद्मसंस्थः पद्मगर्भसमुद्यतः ॥ ५१ ॥
अर्यमायानिमंत्रस्य अर्यमात्रीभिरब्जजः ॥
कर्पूरं कुंकुमं गंधं पुष्पं धूपकसंज्ञकम् ॥ ५२ ॥
घृतगुग्गुलुधूपोऽत्र नैवेद्यं घृतपायसम् ॥
होमद्रव्यं घृतान्नं स्याच्छाल्यन्नेन बलिं हरेत् ॥ ५३ ॥
हस्ते समुत्थितो व्याधिर्नवरात्रेण मुंचति ॥
उदुत्यमिति हिरण्यस्तु यो गायत्र्यदिती जपेत् ॥ ५४ ॥
रक्तगन्धं कुंकुमं च पुष्पं राजीवसंज्ञकम् ॥
सगंधगुग्गुलुधूपो नैवेद्यं घृतपायसम् ॥ ५५ ॥
मधुपुष्पतिलाज्यान्नं दूर्वाभिः संहितं हविः ॥
गुडशर्करमध्वाज्यपिष्टान्नेन बलिं हरेत् ॥ ५६ ॥

चित्रायामुत्थितो व्याधिर्दशरात्रेण मुंचति ॥
चित्रंदेवानामित्यस्य गायत्रीदितिजो रविः ॥ ५७ ॥
अक्षसूत्राजपकरस्त्वद्रं च पांशिलेरतः ॥
सकुंकुमागुरुर्धूपःकुसुमं चित्रवर्णकम् ॥ ५८ ॥
नैवेद्यं मोदकाज्यान्नं चित्रान्नं सघृतं हविः ॥
तदन्नेन बलिं दद्यात्सर्वरोगापनुत्तये ॥ ५९ ॥
स्वात्यृक्षे चोत्थितो व्याधिः सर्वदा निधनप्रदः ॥
एकद्वित्रिचतुःपंचमासैर्वापि विमुंचति ॥ ६० ॥
सनः पितेति मंत्रस्य गायत्रीमरुदंगिरा ॥
खड्गचर्मधरः कृष्णो गंधकृष्णागुरुर्भृशम् ॥ ६१ ॥
पुष्पं दमनकं धूपं चंदनागुरुगुग्गुलुः ॥
नैवेद्यं पायसं साज्यं हविस्तेन बलिं हरेत् ॥ ६२ ॥
द्विदैवभे भवेद्व्याधिर्मासेनैकेन मुंचति ॥
इंद्राग्नी आगतमिति गायत्री चास्य चैव वा ॥ ६३ ॥
मधुच्छंद ऋषींद्राग्नी तयोर्ध्यानं च पूर्ववत् ॥
श्रीखंडं कुंकुमं गधं तयोः पुष्पं सरोरुहम् ॥ ६४ ॥
देवदारुतरोर्धूपो नैवेद्यं घृतपायसम् ॥
तदेवान्नं हविस्तत्र चित्रान्नेन बलिं हरेत् ॥ ६५ ॥
मित्रभे चोत्थितो व्याधिर्दशरात्रेण मुंचति ॥
मित्रस्य चर्षिणीरिति गायत्री वास्य चैवहि ॥ ६६ ॥
ऋषिर्हिरण्यस्तूपाख्यस्तत्र मित्रोऽधिदेवता ॥
द्विभुजः पद्मगर्भाख्यो पद्मभृत्पद्मसंस्थितः ॥ ६७ ॥
कुंकुमं पुण्डरीकाख्यं पुष्पं धूपं च चंदनम् ॥
नैवेद्यं पायसं साज्यं हविः कंदमसूरिकम् ॥ ६८ ॥
बलिं तत्र प्रदातव्यं मधुशर्करपायसम् ॥

घृतपूरकमापान्नं मुद्गगर्भैश्च संयुतम् ॥ ६९ ॥
ज्येष्ठायामुत्थितो व्याधिर्मृत्युरेव न संशयः ॥
अथवा मासमेकं वा मुंचत्येव न संशयः ॥ ७० ॥
इंद्रव इति मंत्रस्य गायत्री चांगिरा ऋषिः ॥
इंद्रस्तु पूर्ववद्गधं चंदनं कुसुमं शुभम् ॥ ७१ ॥
कर्पूरधूपो नैवेद्यं चित्रान्नं सुमनोहरम् ॥
हविष्यासूरणं कंदं मधुकंदं सुपायसम् ॥ ७२ ॥
विचित्रपुष्पगंधेन दध्यन्नेन वलिं हरेत् ॥
मूलभे चोत्थितो व्याधिर्मासार्धेन विमुंचति ॥ ७३ ॥
खड्गचर्मधरः कृष्णः करालवदनः प्रभुः ॥
मो षुणस्य च गायत्री घोरकंठोऽथ नैर्ऋतिः ॥ ७४ ॥
गंधः कृष्णागुरुः पुष्पं पद्मनीलोत्पलं शुभम् ॥
धूपं कृष्णागुरुर्मापमिश्रितं चोपहारकम् ॥ ७५ ॥
तदेवान्नं हविस्तत्र मापान्नेन वलिं हरेत् ॥
वारिभे चोत्थितो व्याधीरोगिणो निधनप्रदः ॥ ७६ ॥
विमुंच्यथवा मासैर्द्वित्रिपट्पंचसप्तकैः ॥
आप्यायस्येति मंत्रस्य गायत्री पद्मभोजनम् ॥ ७७ ॥
सुवर्णो द्विभुजः पद्मपाणिर्गन्धस्तु चंदनम् ॥
पद्मशैलेयधूपोऽन्नं नैवेद्यं घृतपायसम् ॥ ७८ ॥
हविर्मसूरमिष्टान्नं तदन्नेन वलिं हरेत् ॥
विश्वभे चोत्थितो व्याधिः सार्द्धमासेन मुंचति ॥ ७९ ॥
विश्वेदेवा स इत्यस्य गायत्री विश्वदेवताः ॥
कमंडल्वभयांभोजवरदश्च कुशासनः ॥ ८० ॥
चंदनं कमलं पुष्पं धूपं सघृतगुग्गुलुः ॥
नैवेद्यं पायसान्यान्नं हविरप्येतदेवहि ॥ ८१ ॥

समिद्भिर्निचुलैः सार्द्धं तदन्नेन बलिं हरेत् ॥
श्रवणे चोत्थितो व्याधिर्दशरात्रेण मुंचति ॥ ८२ ॥
अतो देवेति मंत्रस्य गायत्री पद्मजो हरिः ॥
पीतांबरः कृष्णवर्णः शंखचक्रगदांबुजः ॥ ८३ ॥
चंदनं मालतीपुष्पं धूपः कर्पूरगुग्गुलुः ॥
शाल्यन्नं षड्रसोपेतं भक्ष्यभोज्यादिभिः सह ॥ ८४ ॥
नैवेद्यं हविरप्येतत्पायसेन बलिं हरेत् ॥
वसुभे चोत्थितो व्याधिर्दशरात्रेण मुंचति ॥ ८५ ॥
त्रायंतामिति मंत्रस्यानुष्टुब्व्यासो वसुस्मृतः ॥
चापबाणधरः शुक्लगंधः कर्पूरचंदनम् ॥ ८६ ॥
वारिजं गुग्गुलुंधूपो नैवेद्यं घृतपायसम् ॥
हविश्चोदुंबरसमिद्घृतपायससंयुतम् ॥ ८७ ॥
लड्डुकापूपमध्वाज्यतिलपिष्ट बलिं हरेत् ॥
वारुणे चोत्थितो व्याधिरष्टरात्रेण मुंचति ॥ ८८ ॥
इमं मे वरुण इत्यस्य गायत्री कपवचा ऋषिः ॥
नागपाशधरः श्रीमान्नवरत्नविभूषितः ॥ ८९ ॥
मकरस्थोगुरुर्गांवः पुष्पं च कमलात्मकम् ॥
कर्पूरं चंदनं धूपो नैवेद्यं घृतपोलिका ॥ ९० ॥
हविरश्वत्थसमिधश्चित्रान्नेन बलिं हरेत् ॥
अजपाद्रे भवेद्व्याधिः सर्वदा निधनप्रदः ॥ ९१ ॥
अथवा बहुभिर्मासैर्दिवसैर्वा विमुंचति ॥
वामपादकरं भूम्यामाकाशे त्वधरद्वयम् ॥ ९२ ॥
प्रसार्य प्रांजलिः साक्षादीश्वरं चिंतयन् स्थितः ॥
शतमग्निरित्यस्याजपा गायत्री चतुराननः ॥ ९३ ॥
कुकुमं चदनं गंधं पुष्पं श्वेतार्कसंज्ञकम् ॥

धूपः शतौषधीमूलं नैवेद्यं घृतपायसम् ॥ ९४ ॥
हविः कूष्मांडखंडः स्याद्दध्यन्नेन बलिं हरेत् ॥
अहिर्बुध्न्ये भवेद्व्याधिः सार्द्धमासेन मुंचति ॥ ९५ ॥
नमस्ते रुद्र इत्यस्य सर्वं तत्रैव संस्थितम् ॥
गंधचंदनकर्पूराः पुष्पं पद्मोत्पलं शुभम् ॥ ९६ ॥
सबिल्वं गुग्गुलुर्धूपो नैवेद्यं घृतपायसम् ॥
मुद्गमाषतिलान्नाज्ययवव्रीहिमयं हविः ॥ ९७ ॥
माषमुद्गतिलान्नेन सम्यक् तत्र बलिं हरेत् ॥
रेवत्यामुत्थितो व्याधिरष्टरात्रेण मुंचति ॥ ९८ ॥
हंसः शुचिषदित्यस्य जगती कश्यपो ऋषिः ॥
· च देवतांभोजवर्णांभोजधरः शुभः ॥ ९९ ॥
चंदनगंधोऽत्र पुष्पमंदारसंभवम् ॥
पस्तु गुग्गुलुः साज्यं नैवेद्यं घृतपायसम् ॥ १०० ॥
हविस्तदेव सलिलं दध्यन्नेन बलिं हरेत् ॥
भूतेशानुचरो यस्माद्रोगनाथो महाज्वरः ॥ १॥
रोगादस्माच्च मां त्राहि तं गृहीत्वोत्तमं बलिम् ॥
पतिपरस्तु भवेद्व्याधिः पंचरात्रेण मुंचति ॥ २ ॥
तु देवता तत्र पायसेन बलिं हरेत् ॥
यायां भवेद्व्याधिः सप्तरात्रेण मुंचति ॥ ३ ॥
उमा तु देवता तत्र घृतान्नेन बलिं हरेत् ॥
चतुर्दश्यां भवेद्व्याधिर्मृत्युदो वा द्विमासकैः ॥ ४ ॥
मुंचंति देवताः सर्वाः पिष्टान्नेन बलिं हरेत् ॥
पौर्णिमायां भवेद्व्याधिस्त्रिरात्रेण विमुंचति ॥ ५ ॥
चंद्रस्तु देवता तत्र दध्योदनबलिं हरेत् ॥
सूर्यवारे भवेद्व्याधिः सोमवारे भवेत्तथा ॥ ६ ॥

भौमवारे भवेद्व्याधिः क्लेशाय मरणाय च ॥
कुजस्तु देवता तत्र रक्तान्नेन बलिं हरेत् ॥ ७ ॥
बुधवारे भवेद्व्याधिः सप्तरात्रेण मुंचति ॥
बुधस्तु देवता तत्र मुद्गान्नेन बलिं हरेत् ॥ ८ ॥
गुरुवारे भवेद्व्याधिः पंचरात्रेण मुंचति ॥
गुरुस्तु देवता तत्र हरिद्रान्नबलिं हरेत् ॥ ९ ॥
भृगुवारे भवेद्व्याधिः सप्तरात्रेण मुंचति ॥
शुक्रस्तु देवता तत्र चित्रान्नेन बलिं हरेत् ॥ ११० ॥
शनिवारे भवेद्व्याधिर्मासार्द्धेन विमुंचति ॥
शनिस्तु देवता तत्र माषान्नेन बलिं हरेत् ॥ ११ ॥
एवं राश्यादिषु दुर्गाबलिं दद्यात्तदीश्वरे ॥
यो बलिं कुरुते सम्यग्रोगी रोगात्प्रमुच्यते ॥ १२ ॥
आधाने निधने प्रत्यग्जन्माह्वयविपत्करे ॥
नक्षत्रजनिते व्याधौ क्लेशाय मरणाय च ॥ १३ ॥
आश्लेषार्द्रात्रिपूर्वायमवरुणमहच्छक्रतारानलाः स्युः ।
द्वादश्यां स्कंदरिक्तातिथिषु च रविजाराकवारेषु योषाम् ॥
संजाते तस्य रोगे यमपुरमचिरात्प्राप्नुवन्त्येव चंद्रे ।
जन्मन्यष्टाख्यबंधुव्ययभवनगते मृत्युलग्ने च राशौ ॥ ११४ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठविरचितायां संहितायां रोगोत्पत्तिशान्त्यध्यायः षट्चत्वारिंशः ॥ ४६ ॥

---

**इति वसिष्ठसंहिता समाप्ता.**

पुस्तक मिलनेका ठिकाना-
गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना,
कल्याण-मुंबई.

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" प्रेस-मुंबई.